कृष्णदास संस्कृत सीरीज
१२१

श्रीमता पद्मप्रभुसूरिणा विरचित:

# भुवनदीपक:

[प्रश्नमार्गीय:]

दीप्तिव्याख्यया संवलित:

व्याख्याकार:

**डॉ. कामेश्वर उपाध्याय:**

ज्यौतिषाचार्य: (लब्धस्वर्णपदक:)

पी-एच. डी. , यू. जी. सी. परीक्षोत्तीर्ण:

ज्यौतिषविभाग:-काशी-हिन्दू विश्वविद्यालय:, वाराणसी=५

**कृष्णदास अकादमी, वाराणसी**

१९९०

# विषयानुक्रमणिका

**।। श्री ।।**

# भुवनदीपक:

**'दीप्ति' संस्कृतहिन्दीटीकाभ्यामालोकित:**

मङ्गलाचरणम्

**सारस्वतं नमस्कृत्य मह: सर्वतमोपहम्।**
**ग्रहभावप्रकाशेन ज्ञानमुन्मील्यते मया ।। १ ।।**

**दीप्ति**:–परम्परया प्राप्तं मङ्गलं प्रस्तौति पद्मप्रभुसूरिनामाऽऽचार्य: सारस्वतमिति। सरस्वत्या: सम्बन्धि सारस्वतम् । मह: तेज: कीदृशं तन्मह: ? सर्वतमोपहम् अन्धकारविनाशकम्, नमस्कृत्य प्रणम्य मया ग्रन्थभावप्रकाशेन सूर्यादिनवग्रहाणां तन्वादिभावेषु गतानां मेषादिद्वादशराशीनां च प्रकाशेन स्फुटीकरणेन ज्ञानमुन्मील्यते प्रकाश्यते ।

हिन्दी:–मैं पद्मप्रभुसूरि नामक आचार्य समग्र अविद्या रूप अन्धकार को विनष्ट कर देने वाले सारस्वत तेज को प्रणाम कर ग्रहों एवं द्वादश भावों के विवेचन से ज्योति स्वरूप ज्ञान का प्रकाशन कर रहा हूँ ।

'सारस्वतम्' पद गणेश का भी वाचक है–सरस्वत्या: पार्वत्या अपत्यं गणेश: ।

विषयविभाग:

**ग्रहाधिपा उच्चनीचा अन्योऽन्यं मित्रशत्रव:।**
**राहोर्गृहोच्चनीचानि केतुर्यत्रावतिष्ठते ।। २ ।।**

**दीप्ति**:–"षट्त्रिंशदस्मिन् द्वाराणि ग्रन्थे भुवनदीपके"ति प्रतिश्रुत्या विषयविभागे तान्येव द्वाराणि वक्ष्यन्ते । तत्र द्वाराणि– १. गृहाधिपा= गृहस्वामिन: २. उच्चनीचा: = राशिवशादुच्चनीचा ग्रहा: । ३. अन्योऽन्यं मित्रशत्रव: = ग्रहाणां पारस्परिक: सम्बन्ध: ४. राहोर्गृहोच्चनीचानि = राहोर्ग्रहस्य द्वाराण्युच्चनीचानि ५. केतुर्यत्रावतिष्ठते = केतोर्गृहमित्यभिप्राय: ।

**हिन्दी**–ग्रन्थकर्ता ने "भुवनदीपक" ग्रन्थ को छत्तीस द्वारों में व्यवस्थित किया है--- "षट्त्रिंशदस्मिन् द्वाराणि ग्रन्थे भुवनदीपके" । अत: उन द्वारों की संज्ञा श्लोक संख्या दो से दश पर्यन्त पढ़ी गई है । ये क्रमश: निम्नलिखित हैं -

१. गृहाधिप [भावों के स्वामी ] २. उच्चनीच ३. मित्रशत्रु ४. राहु का गृह, उच्च और नीच ५. केतु का गृह ।

**स्वरूपं ग्रहचक्रस्य वीक्ष्यं द्वादशवेश्मसु।**
**निर्णयोऽभीष्टकालस्य यथा लग्नं विचार्यते ।। ३ ।।**

**दीप्ति:**—क्रमप्राप्तानि द्वाराणि कथ्यन्ते-- ६. ग्रहचक्रस्य स्वरूपम् = ग्रहाणां स्वरूपम् ७. द्वादशवेश्मसु वीक्ष्यम् = स्वस्थानस्थितो ग्रह: कं कं भावं पश्यति, द्वादशभावेषु कुत्र किं विलोकनीयमित्यभिप्राय: ८. अभीष्टकालस्य निर्णय: = इष्टघट्यानयनम् ९. लग्नविचार: ।

**हिन्दी:**—६. ग्रहों का स्वरूप ७. ग्रहों की द्वादशभावदृष्टि ८. इष्टघट्यानयन अर्थात् इष्टकाल का साधन ९. लग्न का विचार ।

**ग्रहो विनष्टो यादृक् स्याद्राजयोगचतुष्टयम्।**
**लाभादीनां विचारश्च लग्नेशावस्थिते: फलम् ।। ४ ।।**

**दीप्ति:**—१०. विनष्टो ग्रह: कीदृशो भवति इति दशमे द्वारे वर्तते ११. राजयोगचतुष्टयम् = लग्नेशकार्येशाभ्यामुत्पन्नस्य चतुष्टयस्य कथनमिति भाव: । १२. लाभादीनां विचार: = प्रष्टुर्लाभो भविष्यत्यलाभो वेति १३. लग्नेशावस्थिते: फलम् = लग्नपते: स्थितिवशाद् द्वारफलम् ।

**हिन्दी:**—१०. विनष्ट ग्रह की स्थिति का विचार ११. राजयोग चतुष्टय अर्थात् लग्नेश और कार्येश (प्रश्न सम्बन्धी भावेश) की स्थिति से चार प्रकार के राजयोग का कथन द्वार १२. लाभादि का विचार १३. लग्नेश की स्थिति से उत्पन्न फल का विचार ।

**गर्भस्य क्षेममेतस्य गुर्विण्या: प्रसवो यदा।**
**अपत्ययुग्मप्रसवो ये मासा गर्भसम्भवा: ।। ५ ।।**

**दीप्ति:**—१४. एतस्य गर्भस्य क्षेमम् ? गर्भिण्या: गर्भस्य शं वर्तते न वेति १५. यदा गुर्विण्या: प्रसव: = गर्भभारालसाया: प्रसूतिकाल: कदा वर्तते १६. अपत्ययुग्मप्रसव: = युगलबालजन्मज्ञानम् १७. गर्भसम्भवा: ये मासा: तेषां सङ्ख्या निर्णय: ।

**हिन्दी–** १४. गर्भ क्षेम या गर्भपात का निर्णय कथन १५. गर्भिणी का प्रसूतिकाल कथन १६. यमलयोग अर्थात् जुड़वे बच्चों का जन्म लेने का ज्ञान १७. जिन महीनों में गर्भ स्थित है उनका पृथक् पृथक् कथन ।

**धृता विवाहिता भार्या विषकन्या यथा भवेत्।**

**भावान्तगो ग्रहो यादृग्विवाहादिविचारणाः ।। ६ ।।**

**दीप्तिः–** १८. धृता = उद्धृता, विवाहिता भार्या = पत्नी, १२. विषकन्या = कुलनाशिनी विषबाला (प्राचीनकाले राजनीतौ विषकन्यानां प्रयोगो भवति स्म) अतस्तासां लोके नाशाय एव प्रयोग अभवत् । यथा = येन प्रकारेण भवेत् २०. भावान्तगो ग्रहो यादृग् = तन्वादिभावानामन्तिमेंऽशे स्थितस्य ग्रहस्य यादृक् फलं तस्य कथनम् एवञ्च २१. विवाहादिविचारणाः विवाहसम्बन्धिफलकथनम् ।

**हिन्दी–** १८ वें द्वार में धृता अर्थात् रखैल या धरैल और पहले से ही विवाहिता भार्या मिलने का विचार, १९ वें में कुलनाश करने वाली कन्या का विचार, २०. वें में भाव के अन्त में पड़े ग्रह का फल कथन, २१ वें में विवाहादि का विचार ।

**वक्तव्यता विवादस्य सङ्कीर्णपदनिर्णयः।**

**निश्चयो दीप्तपृच्छासु पथिकस्य गमागमौ ।। ७ ।।**

**दीप्तिः–** २२ विवादस्य = युद्धस्य कलहस्य वेति वक्तव्यता कथनम्, २३ सङ्कीर्णपदनिर्णयः = मिश्रपदनिर्णयः, २४ दीप्तपृच्छासु = प्रवासीनां भरणबन्धनादिनां विचारः २५ पथिकस्य गमागमौ निर्णयः ।

**हिन्दी–** २२ युद्ध में जीत हार का ज्ञान, २३ सङ्कीर्णपदों का विचार, २४ क्रूर या धातुवादादि संदिग्ध (मृत्यु या बन्ध) प्रश्न का विचार, २५ पथिक गमन आगमन का विचार ।

**मृत्युयोगो दुर्गभङ्गश्चौर्यादिस्थानसप्तकम्।**

**क्रयणकार्यविज्ञानं नौमृत्युबन्धनत्रयम् ।। ८ ।।**

**दीप्तिः–** २६ मृत्युयोगः, २७ दुर्गभङ्गः = कोटभङ्गः २८ चौर्यादिस्थानसप्तकम् = चौर्यादिसप्तस्थानानां कथनम् २९ क्रयणकार्यविज्ञानम् = क्रयसमर्घादिनिरूपणम्, ३० नौमृत्युबन्धनत्रयम् = नौकामरणकारागारादिविचारः ।

**हिन्दी–** २६ मृत्युयोग, २७ किला भङ्ग, २८ चौर्यादि सात स्थानों का विचार, २९ क्रयविक्रय आदि का विचार, ३० नौका, मृत्यु और बन्धन का विचार ।

**लाभादयो दिनेऽतीते फलं मासस्य लग्नपात्।**

**द्रेष्काणादेः फलं सर्वं दोषज्ञानं महाद्भुतम् ।। ९ ।।**

**दीप्तिः–** ३१ अतीते दिने = व्यतीते दिवसे गतदिवस इति भावः, लाभादयो = लाभस्यालाभस्य वेति विचारः, ३२ लग्नपात् मासस्य फलमर्थात् लग्नपतेः सकाशात्कस्मिन्मासे कदा च लाभो भविष्यतीति प्रश्नस्य विचारः, ३३ द्रेष्काणादेः सर्वं फलं = राशेर्द्रेष्काणस्य किं फलं सर्वमेतत् त्रयस्त्रिंशद्द्वारे प्रदर्शितिम्, ३४ महाद्भुतं दोषज्ञानम् = अद्भुतदोषाणां ज्ञानमर्थाद् दैवादिकृतदोषज्ञानम् ।

**हिन्दी–** ३१ बीते दिनों के लाभ तथा हानि का विचार, ३२ लग्नेश के विचार से मानफल का विचार, ३३ द्रेष्काण फल विचार, ३४ अद्भुत (देवप्रेतादिजन्य) दोषों का ज्ञान ।

**दिनचर्या नृपादीनां गर्भेऽस्मिन् किं भविष्यति।**

**षट्त्रिंशदस्मिन् द्वाराणि ग्रन्थे भुवनदीपके ।। १० ।।**

**दीप्तिः–** ३५ नृपादीनां राज्ञां दिनचर्या प्रतिदिवसीया कार्यपद्धतिः, प्रतिदिनं नवीनं किमुत्पत्स्यत इति विचारः ३६ अस्मिन् गर्भे किं भविष्यत्यर्थात् पुत्रः पुत्री वेति प्रश्नस्य निर्णयः । प्रश्नशास्त्रस्यास्य जातकाङ्गभूतस्य ग्रन्थेऽस्मिन् भुवनदीपके नवभिः श्लोकैः षट्त्रिंशद्द्वाराणि कथितानि सन्ति । अत्राध्यायक्रमोऽपि तथैव विद्यते यथा प्रतिश्रुतौ ग्रन्थकृता गदित इति ।

**हिन्दी**–३५ राजाओं की दिनचर्या ३६ गर्भ से जायमान संतति का विचार । इस प्रकार इस भुवनदीपक नामक ग्रन्थ में छत्तीस द्वार पठित हैं ।

ग्रन्थकर्त्ता ने इस ग्रन्थ में 'अध्याय' के स्थान पर 'द्वार' शब्द का प्रयोग किया है । इन छत्तीस द्वारों में समग्र ग्रन्थ विभाजित तथा सुव्यवस्थित है । अब तक नौ श्लोकों में ग्रन्थ में वर्णित विषयों की सूची प्रस्तुत की गई है ।

अथ गृहाधिपद्वारम् ।। १ ।।

**मेषवृश्चिकयोर्भौमः शुक्रोवृषतुलाभृतोः ।**
**बुधः कन्यामिथुनयोः कर्कस्वामी तु चन्द्रमाः ।। ११ ।।**

**दीप्तिः**–मेषवृश्चिकयोः प्रथमाष्टमयोः स्वामी भौमो मङ्गलो भवति, शुक्रश्च वृषलाभृतोः गोधटयोः स्वामी विश्रुतः, बुधो ग्रहः कन्यामिथुनयोः षष्ठतृतीययोः स्वामी भवति, कर्कस्य कुलीरस्य स्वामिनौ भवतः । अन्ये सर्वे पञ्चताराग्रहाः द्विराशिपा इति ख्यातमिदं तथ्यम् । विषयेऽस्मिन् वृद्धानां वचनं प्रमाणम्—

कण्ठीरवं विक्रमिणं विलोक्य स्वीयं पदं तत्र चकार सूर्यः ।
मैत्र्या तदासन्नतया कुलीरे निजं बबन्धालयमेणलक्ष्या ।।
अन्ये ग्रहा गृहयियाचिषया क्रमेण शीतांशुतीग्ममहसोः सदनं समीयुः ।
प्राप्तक्रमेण ददतुर्भवनानि तौ तु ताराग्रहा द्विभवनास्तत एव जाताः ।।

**हिन्दी**–इस श्लोक में मेषादि बारह राशियों के क्रमशः स्वामी ग्रह कहे गये हैं । मेष और वृश्चिक राशियों का स्वामी मंगल होता है । वृष और तुला राशियों का स्वामी शुक्र होता है । कन्या और मिथुन राशियों का स्वामी बुध होता है । तथा कर्क राशि का स्वामी चन्द्रमा होता है ।

**स्यान्मीनधन्विनोर्जीवः शनिर्मकरकुम्भयोः ।**
**सिंहस्याधिपतिः सूर्यः कथितो गणकोत्तमैः ।। १२ ।।**

**दीप्तिः**–मीनधन्विनोः स्वामी जीवः स्याद् अर्थात् झषधनुर्धरयोः स्वामीग्रहो बृहस्पतिर्भवति । एवमेव मकरकुम्भयोः स्वामी शनिर्भवति । सिंहस्याधिपतिः सिंहराशेरधिपतिः सूर्यो रविर्गणकोत्तमैः ज्योतिर्विद्भिः कथितो गदितो विद्यतेति । अत्रैका प्रथिता कथा श्रूयते । पुरा किल

सिंहादिषट्कगृहस्याधिपति: सूर्य आसीत्म कर्कादि षट्कगृहस्याधिपतिश्चन्द्रो विलोमक्रमेणासीत् । अन्ये सर्वे ग्रहा: यदाऽऽगत्य प्रार्थनां चक्रुस्तदा सूर्याचन्द्रमसौ एकैकं राशिभागं तेभ्य: प्रदत्तवन्ताविति ।

**हिन्दी**–मीन और धनु राशियों का स्वामी बृहस्पति होता है । मकर तथा कुम्भराशियों का स्वामी शनि होता है । सिंह राशि का अधिपति सूर्य कहा गया है । इस प्रकार श्रेष्ठ गणकों ने राशियों के अनुसार उनके स्वामी ग्रहों का यथाक्रम विभाजन किया है ।

राशिस्वामी चक्र

| राशि | मेष<br>वृश्चिक | वृष<br>तुला | मिथुन<br>कन्या | कर्क<br>× | सिंह<br>× | धनु<br>मीन | मकर<br>कुम्भ |
|---|---|---|---|---|---|---|---|
| स्वामि | भौम | शुक्र | बुध | चन्द्र | सूर्य | गुरु | शनि |

बारह राशियों का विभाजन आचार्यों की वैज्ञानिक दृष्टि का प्रतिफल है । उन्होंने समग्र ब्रह्माण्ड को एक वृत्त के रूप में मान लिया है । एक ब्रह्माण्ड की परिधि सूर्य किरणों के चतुरस्र प्रसार पर्यन्त मानी गयी है—

**दिनकरकरनिकरनिहततमसो नभस: स परिधिरुदितस्तै: ।**

सि० शि० गोलाध्याय:

सूर्य (आधुनिक सिद्धान्त से पृथ्वी) परिभ्रमण के मार्ग की क्रान्तिवृत्त संख्या है । अत: क्रान्तिवृत्त के द्वादश विभाग की एक राशि होती है । किसी भी वृत्त में ३६० अंश होते है । अत: $\frac{३६०}{१२} = ३०$

१२ राशियों का एक राशि चक्र होता है । क्रान्तिवृत्त में ही अश्विनी नक्षत्र से लेकर रेवती पर्यन्त २७ नक्षत्र अवस्थित है । एक नक्षत्र के चार चरण कल्पित हैं । फलत: २७ × ४ = १०८ चरण, अर्थात् २७ नक्षत्रों के समग्र चरण १०८ होंगे । नक्षत्रों के चरण योग से ही अपना आकार ग्रहण करती हैं । फलत: २७ नक्षत्रों के १०८ चरणों में १२ राशियों से विभाजन करने पर १०८ ÷ १२ = ९ चरण शेष होते हैं । अत: नक्षत्रों के नौ-नौ चरणों के क्रमिक समवाय से एक-एक राशि का स्वरूप बनता है । चूंकि एक नक्षत्र में ४

चरण होते हैं । अत: ९ चरणों की पूर्ति में २ १/४ नक्षत्रों का योग बनता है । इस प्रकार—

अश्विनी ४, भरणी ४, कृत्तिका १ चरण = मेष राशि
कृत्तिका ३, रोहिणी ४, मृगशीर्ष २ चरण = वृष राशि
मृगशीर्ष २, आर्द्रा ४, पुनर्वसु ३ चरण = मिथुन राशि
पुनर्वसु १, पुष्य ४, आश्लेषा ४ चरण = कर्क राशि
मघा ४, पूर्वाफाल्गुनी ४, उत्तराफाल्गुनी १ चरण = सिंह राशि
उत्तराफाल्गुनी ३, हस्त ४, चित्रा २ चरण = कन्या राशि
चित्रा २, स्वाती ४, विशाखा ३ चरण = तुला राशि
विशाखा १, अनुराधा ४, ज्येष्ठा ४ चरण = वृश्चिक राशि
मूल ४, पूर्वाषाढ़ा ४, उत्तराषाढ़ा १ चरण = धनु राशि
उत्तराषाढ़ा ३, श्रवण ४, धनिष्ठा २ चरण = मकर राशि
धनिष्ठा २, शतभिषा ४, पूर्वाभाद्रपदा ३ चरण = कुम्भ राशि
पूर्वाभाद्रपदा १, उत्तराभाद्रपदा ४, रेवती ४ चरण = मीन राशि

राशियों का सीधा सम्बन्ध नक्षत्रों से होता है । प्रत्येक ग्रह इसी राशिचक्र से होकर गुजरता है । सूर्य जब इन बारह राशियों से होकर गुजरता है तो क्रमश: दो-दो राशियों के भोग से ऋतु का परिवर्तन होता है । मकर कुम्भ राशि में सूर्य के रहने पर शिशिर ऋतु का परिवर्तन होता है । मकर कुम्भ राशि में सूर्य के रहने पर शिशिर ऋतु होती है । मीनमेष में वसन्त, वृष मिथुन में ग्रीष्म, कर्क सिंह में वर्षा, कन्या तुला में शरद् और वृश्चिक धनु में हेमन्त ऋतुओं आती हैं । इससे यह सिद्ध होता है कि ग्रहों का राशियों से प्रत्यक्ष गणितीय सम्बन्ध है । इन बारह राशियों में से कर्क और सिंह राशियों को स्वतन्त्र रूप से अपना गृह स्थान क्रमश: चन्द्रमा और सूर्य ने अङ्गीकृत किया है । शेष पञ्चताराग्रहों (मंगल, बुध, बृहस्पति, शुक्र और शनि) के दो-दो गृहस्थान पठित हैं । इस सन्दर्भ में एक रोचक श्लोक मिलता है जिसका आशय है कि ग्रहराज सूर्य ने सिंह को पराक्रमी देख कर अपना आश्रय स्थान बनाया । सूर्य मित्र चन्द्रमा ने सिंह राशि के आसन्न स्थित कर्क को अपना आश्रय स्थान बनाया ।

शेष पञ्चताराग्रहों ने कक्षा क्रम से सूर्य और चन्द्रमा की राशि के आगे तथा पीछे स्थित राशियों को अपना गृहस्थान बनाया । ग्रहों का स्थान कक्ष क्रम में इस प्रकार माना गया है—

'भूमेः पिण्डः शशाङ्कज्ञकविरविकुजेज्यार्किनक्षत्रकक्षा' – अर्थात् चन्द्र, बुध, शुक्र, सूर्य, मंगल, बृहस्पति तथा शनि ग्रह आकाश में क्रमशः स्थित हैं ।

सभी ग्रह इन राशियों में ही परिभ्रमण करते हैं । जो ग्रह जिस राशि का स्वामी होता है वह उस राशि में आकर अत्यधिक प्रभावशाली हो जाता है । ग्रहों एवं राशियों के स्वरूप, गुण, आकृति तथा प्रभाव से जातक के ऊपर आने वाली भविष्यत् घटनाओं का विचार होता है । राशियों में भ्रमण करते हुए ग्रह न केवल प्राणिमात्र को प्रभावित करते हैं, बल्कि वे वनस्पतियों, समुद्र, ऋतु, उत्पात दृष्टि तथा भूकम्पादि के भी कारक होते हैं । ग्रहों की युति एवं अन्तरांश को राशि माध्यम से ही जाना जाता है । अतः त्रिस्कन्ध ज्यौतिष में इन राशियों का प्रतिपद प्रयोग किया गया है ।

सूर्य और चन्द्र राशिपति विभाजन में चक्रार्ध को क्रमशः अनुलोम एवं विलोम ढंग से प्रभावित करते हैं । सूर्य सिंह से लेकर मकर तक अनुलोम एवं चन्द्र कर्क से लेकर कुम्भ तक विलोम क्रम से सर्वप्रथम राजा हुए । बाद में इन दिनों ने अन्य ग्रहों को अपने अपने चक्रार्ध में भी स्थान दिया । यह कल्पना बृहत्पराशरहोराशास्त्र में सूत्र रूप में छुपी हुई है—

राजानौ भानुहिमगू नेता ज्ञेयो धरात्मजः ।
बुधो राजकुमारश्च सचिवौ गुरुभार्गवौ ।।
प्रेष्येको रवि पुत्रश्च सेना स्वर्भानुपुच्छकौ ।

अथ ग्रहोच्चनीचद्वारम् ।। २ ।।

**रवेर्मेषतुले प्रोक्ते चन्द्रस्य वृषवृश्चिकौ।**
**भौमस्य मृगकर्कौ च कन्यामीनौ बुधस्य च ।। १३ ।।**
**जीवस्य कर्कमकरौ मीनकन्ये सितस्य च।**
**तुलामेषौ च मन्दस्य उच्चनीचे उदाहृते ।। १४ ।।**

**दीप्तिः**-क्रमप्राप्तमिदं द्वितीयद्वारम् । द्वारेऽस्मिन् को ग्रहः कस्मिन् राशौ उच्चो भवति कस्मिन् च नीच इति प्रतिपादितं विद्यते । वस्तुतस्तु ग्रहाणामुच्चनीचावस्था गणितीया भवति ।

रवेः सूर्यस्योच्चनीचराशी मेषतुले प्रोक्ते । अत्र मेषराशि उच्चं तुला च नीचम् । सप्तमत्वात् उच्चराशितो नीचो भवति । 'उच्चान् नीचं सप्तममर्कादीनाम' प्रथितो राद्धान्तः । एवमेव सर्वत्रापि ज्ञेयम् । चन्द्रस्य विधोः वृष उच्चं वृश्चिको नीचम् । भौमस्य मङ्गलस्य मृगो मकर उच्चं कर्कः कुलीरो नीचम् । बुधस्य विदः कन्यामीनौ षष्ठमीनौ षष्ठराशि उच्चं द्वादशराशिश्च नीचम्। जीवस्य गुरोः कर्क मकरौ कुलीरमृगावुच्चनीचे भवतः । सितस्य शुक्रस्य मीनकन्ये झषबाले क्रमश उच्चनीचे स्तः । मन्दस्य शनैश्चरस्य उच्चनीचे तुलामेषौ च भवतः । अर्थात् तुलायां सौरिरुच्चस्थो भवति मेषे च नीचस्थो ।

अत्र विशेषः –

अजवृषभमृगाङ्गनाकुलीरा
झषवणिजौ च दिवाकरादितुङ्गाः ।
दश-शिखि-मनुयुक्-तिथी-न्द्रियांशै-
स्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः ।।

सूर्यो मेषस्य दशमांशे, चन्द्रो वृषभस्य तृतीयांशे, भौमो मकरस्य अष्टाविंशत्यंशे, बुधः कन्यायाः पञ्चदशांशे, गुरुः कर्कस्य पञ्चमांशे, शुक्रो मीनस्य सप्तविंशत्यंशे, शनिः तुलायाः विंशत्यंशे परमोच्चस्थितो भवति । परमोच्चे स्थिताः ग्रहाः परमशुभफलं दिशन्ति । एवमेवोच्चतः सप्तमराशौ कथितांशे परमनीचङ्गता भवन्ति ।

परमोच्चगता: ग्रहा: सर्वतस्तेजकारिणो जायन्ते । इदमप्यत्र ज्ञेयं यत्परमोच्चांशे ग्रहा तेजस्करास्तत्पश्चात् शनै: शनै: पतिततेजांसि भवन्ति । जातके उच्चस्थितानां ग्रहाणां फलमित्थं गदितं विद्यते—

सुखी भोगी धनी नेता जायते मण्डलाधिप: ।
नृपतिश्चक्रवर्ती च सूर्याद्युच्चैरनुक्रमात् ।।

**हिन्दी**–सूर्य का मेष तथा तुला, चन्द्रमा का वृष और वृश्चिक मंगल का मकर तथा कर्क, बुध का कन्या तथा मीन, बृहस्पति का कर्क तथा मकर, शुक्र का मीन तथा कन्या एवं शनिश्चर का तुला तथा मेष राशियाँ क्रमश: उच्च एवं नीच होती हैं ।

ग्रहों के उच्च एवं नीच राशियों की कल्पना होरा में सिद्धान्तग्रन्थों के ही आधार पर की गई है । स्पष्टग्रह शीघ्रनीचोच्च प्रतिमण्डल में भ्रमण करता है ।

'य: स्यात्प्रदेश: प्रतिमण्डलस्य
दूरे भुवस्तस्य कृतोच्चसंज्ञा ।

पृथ्वी से प्रतिमण्डल वृत्त में दूरतम बिन्दु की उच्च संज्ञा होती है । उच्च से छ: राशि नीचे नीचप्रदेश होता है---'उच्चाद् भषट्कान्तरितं च नीचम् ।' सीधे शब्दों में कहा जाये तो-पृथ्वी से ग्रह की सर्वाधिक दूरी की उच्च संज्ञा होती है तथा सर्वनिकटस्थ दूरी की नीच, यथा—

कुमध्यतो दूरतरे प्रदेशे रेखायुते तुङ्गमिह प्रकल्प्यम् ।
नीचं तथासन्नतरे स ।।

जातकशास्त्र में उच्चनीच का उल्लेख इसलिए किया गया है क्योंकि उच्चस्थ ग्रह अपनी रश्मियों के कारण लोकपावन होता है जबकि नीचस्थ ग्रह हानिकारक होता है ।

परम उच्च एवं परम नीच के ज्ञान के लिए जातक शास्त्र में अंश भी पढ़े गये हैं । इन पठित अंशों को नीचे चक्र में दिया जा रहा है । उच्चांश तक या उच्चांश से पूर्व तक का ग्रह दीप्त किरण होता है । इसके बाद उसकी रश्मियाँ शनै: शनै: सीमटने लगनी हैं ।

उच्चस्थ सूर्य और चन्द्र जातक को नराधिप बनाते हैं । अन्य ग्रह ख्यात तथा धनी करते हैं, यथा गार्गी ऋषि का वचन—

स्वोच्चगौ रविशीतांशू जनयेतां नराधिपम् ।
उच्चस्थौ धनिनं ख्यातं स्वत्रिकोणगतावपि ।।

वहीं पर नीच का फल भी कहा गया है—

अन्धं दिगम्बरं मूर्खं परपिण्डोपजीविनम् ।
कुर्यातामतिनीचस्थौ पुरुषं शशिभास्करौ ।।

उच्चनीच बोधक चक्र

| ग्रह | सूर्य | चन्द्र | भौम | बुध | गुरु | शुक्र | शनि | ग्रह |
|---|---|---|---|---|---|---|---|---|
| राशि अंश | ०/१०° मेष | १/३° वृष | ९/२८° मकर | ५/१५° कन्या | ३/५° कर्क | ११/२७° मीन | ६/२०° तुला | उच्च |
| राशि अंश | ६/१०° तुला | ७/३° वृश्चिक | ३/२८° कर्क | ११/१५° मीन | ९/५° मकरे | ५/२७° कन्या | ०/२०° मेष | नीच |

अथ शत्रुमित्रद्वारम् ।। ३ ।।

**रवीन्दुभौमगुरवो ज्ञशुक्रशनिराहवः ।**
**स्वस्मिन् मित्राणि चत्वारि परस्मिन् शत्रवः स्मृताः ।।१५ ।।**

**दीप्तिः**—तृतीयं द्वारं 'शत्रुमित्राख्यमिति । अत्र पद्मप्रभुसूरिना संक्षिप्तेन श्लोकेन ग्रहाणां मित्रशत्रुज्ञापनं कृतम् । भुवनदीपके पञ्चधामैत्रीचक्रं न प्राप्यते । अत्र ग्रहाणां मित्रं शत्रुर्वा कथितो विद्यते ।

रविः सूर्य इन्दुश्चन्द्रो भौमः कुजो गुरुर्बृहस्पति एते ग्रहाः परस्परं मित्रत्वमापन्नास्तिष्ठन्ति । ज्ञः बुधः, शुक्रः सितः, शनिर्मन्दः, राहुः सैंहिकेय एते ग्रहाः मिथो मित्राणि भवन्ति । चत्वारो ग्रहाः क्रमेण मित्राणि सन्ति। रवीन्दुभौमगुरवः एकवर्गस्थाः परस्परं मित्राणि ज्ञशुक्रशनिराहवोऽपरवर्गस्थाश्च मिथो मित्राणि । एकवर्गस्थानामपरवर्गस्थैः सह शत्रुभावः ।

हिन्दी–सूर्य चन्द्र मंगल और बृहस्पति ग्रह आपस में मित्र होते हैं । ठीक इसी तरह बुध शुक्र शनि तथा राहु भी परस्पर मित्र होते हैं । प्रद्मप्रभु सूरी आचार्य ने संक्षिप्त में सर्वोत्तम ढंग से ग्रहों की मित्रता तथा शत्रुता कही है ।

मित्र, सम, शत्रु या अधिमित्र, सम, मित्र तथा शत्रु नामक त्रिधा या पञ्चधा मैत्री को प्रश्न-शास्त्रियों ने स्वीकार नहीं किया है ।

ग्रहों की शत्रुता तथा मित्रता का वैज्ञानिक कारण उनकी रश्मियाँ हैं । जिन ग्रहों की किरणें परस्पर क्रिया कारक होती है, वे मित्र होते हैं । जिन ग्रहों की किरणें परस्पर क्षतिकारक होती है, वे शत्रु होते हैं ।

बृहज्जातकोक्त मैत्री से यदि सम ग्रह को मित्र मानलिया जाय तो भुवनदीपकोक्त मित्र-शत्रु का कथन सही मिलता है । अपवाद में बृहज्जातक में चन्द्रमा का कोई शत्रुग्रह नहीं पठित है ।

इस प्रकार आचार्य ने ग्रहों का द्विविध वर्गीकरण कर दिया है, जो सुबोध तथा समीचीन है ।

अथ ग्रहाणां परं वैरकथनम्—

**राहुरव्योः परं वैरं गुरुभार्गवयोरपि।**
**हिमांशुबुधयोर्वैरं विवस्वन्मन्दयोरपि ।। १६ ।।**
**ज्ञशनी सुहृदौ मित्राण्यर्कचन्द्रकुजाः सदा।**
**पूज्यवर्गौ गुरुसितौ सैंहिकेयस्य कथ्यते ।। १७ ।।**

**दीप्तिः**–अथेदानीं ग्रहाणां परं वैरं निरुप्यते-राहुरव्योः सैहिकेयसूर्ययोः परं वैरं भवति । गुरुभार्गवयोः जीवशुक्रयोः तथैव वाच्यम् ।
हिमांशुबुधयोश्चन्द्रज्ञयोः परं वैरं ज्ञेयं तथैव विवस्वन्मन्दयोः सूर्यशनिश्चरयोरपि ज्ञेयम् ।

ज्ञशनी बुधशनिश्चरौ सुहृदौ मित्रे, अर्कचन्द्रकुजाः सूर्यसोममङ्गलग्रहाः सदा मित्राणि भवन्ति, गुरुसितौ पूज्यवर्गौ बृहस्पतिशुक्रौ मिथः पूज्यभावसम्पन्नौ भवतः । सैंहिकेयस्य कथ्यतेऽर्थाद् राहोः परं वैरं, मित्रं वेत्यत्र वक्ष्यते ।

**हिन्दी**–राहु और सूर्य का परं वैर होता है । इसी प्रकार बृहस्पति-शुक्र, चन्द्रमा-बुध, तथा सूर्य-शनैश्चर का परं वैर होता है ।

बुध और शनैश्चर परस्पर मित्र होते हैं । सूर्य, चन्द्र और मंगल हमेशा मित्र रहते हैं । बृहस्पति और शुक्र ग्रह परस्पर पूज्यभाव वाले होते हैं । [इनका वैर भी श्रेष्ठ होता है ।] राहु के मित्र और शत्रु का कथन आगे के द्वार में होगा ।

अथ राहुगृहोच्चनीचद्वारम् ।। ४ ।।

**यद्बुधस्य ग्रहस्योच्चं राहोस्तद् गृहमुच्यते।**
**यद्बुधस्य गृहं राहोस्तदुच्चं ब्रुवते बुधाः ।। १८ ।।**
**कन्या राहुगृहं प्रोक्तं राहूच्चं मिथुनं स्मृतम्।**
**राहुनीचं धनुर्वर्णादिकं शनिवदस्य च ।। १९ ।।**

**दीप्तिः**—बुधस्य ग्रहस्य ज्ञस्य यदुच्चं कन्याराशिः, राहोः सैंहिकेयस्य तद् गृहमुच्यतेऽर्थाद् राहोर्गृहं कन्या भवति । बुधस्य यद् गृहं मिथुनं तद् राहोरुच्चं बुधाः गणकाः ब्रुवते कथयन्ति ।

अतोऽत्र निर्णयः राहुगृहं कन्या प्रोक्तं भवत्याशयः । मिथुनं राहूच्चं स्मृतं कथितम् । राहुनीचं धनुराशिर्भवति । उच्चात् षड्भान्तरे नीचव्यवस्थाकारणात् । एवमेव अस्य राहोर्वर्णादिकं गुणस्वभावजात्यादिकं शनिवद् च ज्ञेयम् । शनिवदेव राहोः प्रभावो भवति, एकस्वभावात् ।

**हिन्दी**—बुध ग्रह का जो उच्च होता है वह राहु का गृहस्थान कहलाता है, तथा श्रेष्ठ गणक बुध ग्रह के गृह स्थान को राहु का उच्च स्थान कहते हैं । राहु का गृह स्थान 'कन्या' राशि है और मिथुन उसका उच्च कहा गया है । राहु का नीच धनुराशि में होता है । इसका वर्णादि (स्वभाव, गुण, जाति प्रभृति) शनि की तरह होता है ।

आचार्य ने राहु, शनि, बुध और शुक्र को एक वर्ग में रखा है । एकवर्गस्थ ग्रहों में परस्पर मैत्री होती है । इसी सिद्धान्त के आधार पर प्रश्नभैरव में लिखा गया होगा—

अङ्गीकृतं सौम्यगृहं सुहृत्वात्कन्याह्वयं तच्च विधुन्तुदेन ।
तत्सप्तमं यत् शिखिना गृहीतं मीनाह्वयं चेति बुधा वदन्ति ।।

केतु का उच्च एवं नीच राहु के विपरीत है, क्योंकि ये दोनों परस्पर सप्तमस्थ होने से सर्वदा षड्भान्तरित रहते हैं ।

**राहुर्दुष्टः परं किञ्चिदुदास्ते मित्रसद्मनि।**

**कन्यामिथुनयोः किञ्चिद् विधत्ते शुभमप्ययम् ।। २० ।।**

**दीप्तिः**—राहुर्यद्यपि दुष्टः क्रूरत्वात् तथापि मित्रसद्मनि मित्रगृहे किञ्चित्स्वल्पमुदास्ते उदासीनो भवति । अयं राहुः कन्यामिथुनयोः स्वगृहोच्चयोः किञ्चित्स्वल्पं शुभमपि विधत्ते करोति ।

राहुर्ग्रहो दुष्टो परञ्च मित्रगृहे (बुधशनिगृहे) वर्तमानः क्रूरादिफले उदासीनतां व्यनक्ति । कन्यामिथुनयोर्मध्ये शुभमपि दिशति । यथा विशेषः—

अजवृषकर्कटलग्ने रक्षति राहुः समस्तदुरितेभ्यः ।

पृथ्वीपतिः प्रसन्नः कृतापराधं यथा पुरुषम् ।।

**हिन्दी**—राहु ग्रह स्वभाव से क्रूर होता है, परन्तु मित्र के घर में थोड़ा-सा उदासीन होता है अर्थात् पूर्णरूप से हानिकारक नहीं होता है । यह कन्या और मिथुन राशि में स्थित होने पर थोड़ा-सा शुभ फल भी देता है ।

अथ केतुस्थितिद्वारम् ।। ५ ।।

**राहुच्छाया स्मृतः केतुर्यत्र राशौ भवेदयम्।**

**तस्मात् सप्तमके केतू राहुः स्याद्यत्र चांशके ।। २१ ।।**

**तस्मादंशे सप्तमे स्यात् केतोरंशो नवांशकः।**

**त्रिंशाशो भागशब्देन पारम्पर्यमिदं गुरोः ।। २२ ।।**

**दीप्तिः**—केतुर्ग्रहो राहुच्छायारूपः स्मृतः । यत्र यस्मिन् राशौ अयं राहुर्भवेत् तस्माद्राशेः सप्तमे केतुः । अथवा यस्मिन् नवांशके राहुर्भवति तस्मात् सप्तमेंऽशे नवांशे वा केतुः स्थितो भवति । अंशशब्दकथनेन नवमांशस्य तथा च भागशब्दकथनेन त्रिंशांशस्य बोधो भवति । इदं गुरोः पारम्पर्यं विद्यते । गुरुपरम्परया प्राप्तमिदमिति भावः ।

**हिन्दी**—केतु ग्रह राहु का छाया ग्रह कहा गया है । जिस राशि पर राहु ग्रह होता है । उससे सप्तम स्थान में केतु ग्रह स्थित होता है । एवमेव राहु जिस अंश पर होता है उससे ठीक सप्तम राशि में उतने ही अंश पर केतु स्थित होता है । गुरुपरम्परा के अनुसार अंश शब्द से नवमांश तथा भाग शब्द से त्रिशांश का ग्रहण करना चाहिए ।

राहु और केतु दृश्य ग्रह नहीं हैं । इन्हें छाया ग्रह कहा जाता है । ग्रहण में इनका उपयोग होने से तथा जातक के ऊपर इनका निश्चित प्रभाव होने के कारण प्राचीनाचार्यों ने इनके ऊपर विस्तृत रूप से विचार किया है ।

क्रान्तिमण्डल सूर्य का परभ्रमणपथ है । अन्य सभी ग्रह विमण्डल में घूमते हैं । सूर्य एवं चन्द्रमा के परिभ्रमण वलय जहाँ आपस में मिलते हैं उस स्थान की पातसंज्ञा होती है । क्रान्तिमण्डल से विमण्डल की पूर्व दिशा में स्थित पात को राहु तथा पश्चिम पात को केतु कहते हैं । ये पात षड्भान्तरित होने के कारण एक दूसरे से सप्तमस्थ होते हैं । इसी कारण राहु एवं केतु का अंश साम्य होता है तथा ये परस्पर छः राशि अन्तरित होते हैं ।

यहाँ एक विशिष्ट बात कही गई है कि राहु जिस ग्रह के त्रिंशांश में रहता है उसी ग्रह के त्रिंशांश में केतु भी रहता है । इस बात को 'भुवनदीपकवृति' टीका में अत्यन्त स्पष्ट रूप से लिखा गया है–"आम्नायाः खलु दुर्लभाः" इत्युक्त्वादिति प्रत्यक्षमाह इदं वचनं यस्मिन् ग्रहत्रिंशांशे राहुः स्यात् तस्मिन् ग्रहत्रिंशाशे केतुः स्यात् । ------एवं होराद्रेष्काणदशांशा ज्ञेयाः ।

वस्तुतः जहाँ विभाजन अंशा प्रधान हो, अर्थात् राशि के बदलने से अन्तर न पड़ता हो वहाँ राहु और केतु एक ही वर्ग में रहते है जैसे होरा, त्रिंशांश, तथा द्रेष्काण परन्तु नवमांशवर्ग में राहु केतु एक राशि में नहीं होते । दशांश में भी राहु तथा केतु पृथक्-पृथक् ग्रहों के आधिपत्य में हो जाते हैं ।

अथ ग्रहस्वरूपादिद्वारम् ।। ६ ।।

**भार्गवेन्दु जलचरौ ज्ञजीवौ ग्रामचारिणौ।**

**राहुक्षितिजमन्दार्का ब्रुवतेऽरण्यचारिणः ।। २३ ।।**

**दीप्तिः**–भार्गवश्च इन्दुश्च भार्गवेन्दू शुक्रचन्द्रौ द्वावपि जलचरौ ज्ञजीवौ बुधगुरू ग्रामचारिणौ ग्रामवासिनौ, राहुक्षितिजमन्दार्काः सैंहिकेयभौमशनिसूर्याः चत्वारोऽपि अरण्यचारिणोः वनवासिनो ब्रुवते पण्डिताः कथ्यन्ते ।

**हिन्दी**–शुक्र और चन्द्रमा जलचर, बुध और बृहस्पति ग्रामचर तथा राहु, मंगल, शनि और सूर्य वनचर कहे जाते हैं ।

ग्रहों के इस त्रिविध विभाजन का उद्देश्य मूक प्रश्न के सन्दर्भ में उत्तर ज्ञात करना है । जलचर ग्रह लग्नेश लग्नस्थित या लग्न को देखता हो तो प्रश्न जल, तालाब, कूप, तड़ाग, वापी, जलस्त्रोत एवं तत्सम्बन्धाी प्रदेशों से सम्बन्धित होगा । ग्रामचर ग्रह यदि प्रश्नलग्न से किसी तरह सम्बन्धित हो तो प्रश्न–नगर, ग्राम, जनपद, मनोरंजन स्थल तथा सभादिकों से जुड़ा होगा । वनचर ग्रह यदि प्रश्नलग्न से किसी प्रकार जुड़ा हो तो प्रश्नकर्त्ता निर्जन, वन, पर्वत तथा खनिज से सम्बन्धित प्रश्न होगा ।

अथ ग्रहाणां प्रभातादिकालज्ञानमाह—

**प्रभातमिन्दुजगुरू मध्याह्नं रविभूमिजौ।**
**अपराह्णं भार्गवेन्दू सन्ध्यां मन्दभुजङ्गमौ ।। २४ ।।**

**दीप्ति**:–मूकप्रश्ने वस्तु कदा नष्टमिति ज्ञानाय प्रभातादिकालज्ञानमाह–इन्दुजश्च गुरुश्च इन्दुजगुरू बुधबृहस्पती प्रभातकालं कथयतः । रविभूमिजौ सूर्यभौमौः मध्याह्नकालं वदतः । भार्गवेन्दू शुक्रचन्द्रौ अपराह्णकालं तृतीयप्रहरं ज्ञापयतः मन्दभुजङ्गमौ शनिसैंहिकेयौ सन्ध्याकालं कथयतः । श्लोके कथितैर्ग्रहैः कालज्ञानं भवति । बुधगुरुभ्यां सम्बन्धितः प्रश्नः प्रातःकालेन युक्तो भवति । एवमेवान्येषां ग्रहाणां विषये ज्ञातव्यमिति ।

**हिन्दी**–प्रश्नकुण्डली के अनुसार किसी भी प्रश्न के द्वारा काल (समय) ज्ञान हेतु ग्रहों की वेला संज्ञा यहाँ पठित है ।

बुध और बृहस्पति प्रातः काल, सूर्य मंगल मध्याह्नकाल, शुक्र और चन्द्रमा अपराह्णकाल, तथा शनि और राहु सन्ध्या काल के द्योतक ग्रह हैं ।

इन ग्रहों के द्वारा नष्ट वस्तु, वस्तु, प्रसव, वृष्टि या अन्य किसी भी प्रश्न का पूर्ण होने का काल जाना जा सकता है ।

अथ ग्रहाणां तिर्यगादिदृष्टिः—

**तिर्यग् दृशौ बुधसितौ भौमार्कौ व्योमदर्शिनौ।**
**जीवेन्दू समदृष्टी च शनिराहू त्वधो दृशौ ।। २५ ।।**

**दीप्ति**:–नष्टादिवस्तुज्ञानार्थं तिर्यगादिसूचकं ग्रहस्वरूपं कथयति–बुधसितौ ज्ञशुक्रौ तिर्यग् दृशौ तिर्यग्दृष्टी भवतः ।

भौमसूर्यावूर्ध्वदृष्टिसम्पन्नौ भवतः । व्योमदर्शिनौ शब्दस्यार्थं ऊर्ध्वदर्शिनौ भवति । जीवेन्दू बृहस्पतिचन्द्रौ समदृष्टी भवतः । शनिराहू अधोदृष्टी भवतः । अनेन श्लोकमाध्यमेन नष्टवस्तुनो दिशानयनं भवति । लग्नमुपरि ग्रहाणां दृष्टिभिर्नष्टवस्तुनः स्थितिः स्थानं च ज्ञायते । अज्ञापरः श्लोको दिशो ज्ञानाय लभ्यते, तद्यथा—

शुक्रार्कौ स्तः पूर्वमुखौ गुरुसौम्यावुदङ्मुखौ ।
सोमशनी प्रतीच्यौ च शेषा दक्षिणतो मुखाः ।।

प्रश्नकाले यदि बुधशुक्रौ बलिनौ लग्नं पश्यतः तदाऽपहृतं वस्तु भित्तौ गोपितं विद्यते । एवमेव भौमार्कौ योगकारकौ तदा तद्वस्तु आकाशे गृहस्योच्चभागे, उपरीन्तने स्थाने वा रक्षितं भवति । जीवेन्दू योगकारकौ स्तः तदा तदेव वस्तु गृहे, प्रकोष्ठे, अङ्गणे समे भूभागे वा स्थितं भवति ।

शनिराहू योगकारकौ तदा नष्टवस्तु भूमेः खाते, परिखायां वा रक्षितं भवति ।

**हिन्दी**–बुध और शुक्र तिर्यक् दृष्टि युक्त, मंगल और सूर्य ऊर्ध्व दृष्टि युक्त, गुरु और चन्द्र सम दृष्टि युक्त तथा शनि और राहु अधो दृष्टि युक्त होते हैं ।

ग्रहों की दृष्टि के द्वारा नष्ट या प्राप्तव्य वस्तु की स्थिति का ज्ञान होता है। उदाहरणार्थ कोई वस्तु भूल गई है तो उसकी प्राप्ति के ज्ञान के लिए तात्कालिक लग्न से विचार करना चाहिए । यदि लग्न बुध और शुक्र से युक्त या दृष्ट हो तो वह वस्तु भित्ति (दीवार या कोने) में स्थित होती है ।

ग्रहों की तिर्यक्, ऊर्ध्व, सम और अधः के अतिरिक्त अन्य दृष्टि भी होती है । सभी ग्रह सप्तम स्थान को देखते हैं । मंगल, शनि और बृहस्पति क्रमशः 4-8, 3-10, और 5-9 को भी पूर्ण से देखते हैं ।

**अथ ग्रहदृष्टि चक्र—**

| ग्रह | पूर्णदृष्टि | एकपाद दृष्टि | द्विपाद दृष्टि | त्रिपाद दृष्टि | विशिष्ट दृष्टि | स्थानबोध |
|---|---|---|---|---|---|---|
| सूर्य | ७ | ३,१० | ५,९ | ४,८ | ऊर्ध्व | छत, वलभी एवं भूमि से ऊपर |
| चन्द्र | ७ | ३,१० | ५,९ | ४,८ | सम | समभूमि, कमरा, आँगन आदि |
| भौम | ७,४,८ | ३,१० | ५,९ | ×× | ऊर्ध्व | छत, वलभी एवं भूयि से ऊपर |
| बुध | ७ | ३,१० | ५,९ | ४,८ | तिर्यग् | भित्ति (दीवार), कोना |
| गुरु | ७,५,९ | ३,१० | ×× | ४,८ | सम | समभूमि, कमरा, आँगन आदि |
| शुक्र | ७ | ३,१० | ५,९ | ४,८ | तिर्यग् | भित्ति (दीवार), कोना |
| शनि | ७,३,१० | × | ५,९ | ४,८ | अधः | सुरंग, भूमि के नीचे, अण्डरग्राउण्ड |
| राहु | ७ | ३,१० | ५,९ | ४,८ | अधः | सुरंग, भूमि के नीचे, अण्डरग्राउण्ड |

अथ ग्रहाणां प्रकृतिनिरूपणम्—

**पित्तं प्रभाकरक्ष्माजौ श्लेष्मा भार्गवशीतगू।**
**ज्ञगुरू समधातू च पवनौ राहुमन्दगौ ।। २६ ।।**

**दीप्ति:**—अथेदानीं ग्रहाणां पित्तादिधातुज्ञानमाह—प्रभाकरक्ष्माजौ सूर्यभौमौ पित्तं कुरुतः, भार्गवशीतगू शुक्रचन्द्रौ श्लेष्मा श्लेष्मविकारं वदतः, ज्ञगुरू बुधबृहस्पती समधातू वातपित्तकफसाम्ययुतौ भवतः, राहुमन्दगौ सैंहिकेयशनैश्चरौ पवनौ वातप्रधानौ भवतः । अनेन प्रकारेण ग्रहाणां प्रकृतिज्ञानवशाद् रोगिणां पृच्छायां जन्मकाले वा स्थितेर्ज्ञानं कर्त्तुं शक्यते ।

**हिन्दी**—सूर्य और मंगलग्रह पित्त कारक, शुक्र और चन्द्रमा श्लेष्मा (कफ) कारक, बुध और गुरु कफ, वात एवं पित्त साम्य कारक, राहु और

शनिश्चर ग्रह वात कारक होते हैं । ग्रहों के प्रकृति (वात, पित्त तथा कफ) ज्ञान से प्रश्नकाल में रोगोत्पत्ति सम्बन्धित समस्या का उचित निदान बताया जा सकता है ।

लग्नेश यदि सूर्य या मंगल ग्रह से युक्त हो अथवा प्रश्नलग्न इन ग्रहों से युक्त या दृष्ट हो तब रोगी को पित्त के आधिक्य से परेशानी कहनी चाहिए । अथवा रोगेश जिस ग्रह से आक्रान्त हो उसकी प्रकृति की प्रधानता से रोगोत्पत्ति होती है ।

ग्रहप्रकृति निरूपण चक्र—

| ग्रह | सूर्य | चन्द्र | भौम | बुध | गुरु | शुक्र | शनि | राहु |
|---|---|---|---|---|---|---|---|---|
| प्रकृति | पित्त | कफ | पित्त | सम | सम | कफ | वात | वात |

अथ ग्रहाणां रसज्ञानमाह—

**कुजार्कौ कटुकौ जीवो मधुरस्तुवरो बुधः।**
**क्षाराम्लौ चन्द्रभृगुजौ तीक्ष्णौ सर्पार्कनन्दनौ ।। २७ ।।**

**दीप्तिः**—कुजश्च अर्कश्च कुजार्कौ भौमसूर्यौ द्वावपि कटुकस्वभावौ, जीवो मधुरो बृहस्पतिर्मधुरस्वभावः, बुधः तुवरः कषायप्रियः, चन्द्रभृगुजौ चन्द्रशुक्रौ क्रमेण क्षाराम्लौ अर्थात् चन्द्रः क्षारः शुक्रोऽम्लप्रियः, सर्पार्कनन्दनौ राहुशनी तीक्ष्णौ क्रूरप्रकृतिसम्पन्नावुभौ तीक्ष्णस्वभावौ तीक्ष्णप्रियौ वा भवतः ।

**हिन्दी**—मंगल और सूर्य कटु रस प्रिय होते हैं । बृहस्पति मधुर, बुध कषाय, चन्द्रमा क्षार (नमकीन) शुक्र अम्ल (खट्टा), राहु तथा शनि तीक्ष्ण (तीता) रस प्रिय होते हैं ।

इन ग्रहों के भोज्य रसों के आधार पर प्रश्न-कालाङ्ग चक्र के द्वारा प्रश्नकर्त्ता की भोज्य अभिरुचि बतलाई जाती है । भोजन में षड् रसों की प्रधानता होती है । आठ ग्रहों में षड् रसों का वर्गीकरण करते समय आचार्य पद्मप्रभु सूरि ने राहु तथा केतु एवं मंगल तथा सूर्य को सामान्य अभिरुचि का बतलाया है । ग्रहों के रस के सम्बन्ध में ताजिकनीलकण्ठीकार का मत कुछ पृथक् है । [1] उन्होंने सात रसों को माना है, जैसे सूर्य कटुक, चन्द्र नमकीन, मंगल तिक्त बुध मिश्रित, गुरु मधुर, शुक्र अम्ल तथा शनि कषाय, इनकी कल्पना

में राहु ग्रह को स्थान नहीं मिल सका है । रसों के प्रयोजन का वर्णन इनके ग्रन्थ में निम्नलिखित है—

लग्नं पश्यति यः खेटस्तस्य यः कथितो रसः ।
भोजनेऽसौ रसो वीर्यक्रमाद्वाच्याः परे रसाः ।।[२]

अर्थात् जो ग्रह लग्न को देखता है उसके रस की जातक में प्रधानता होती है । इसके बाद जो ग्रह जितना बली होता है क्रमशः उसके रस की उतनी मात्रा में प्रधानता होती है । जातकपारिजातकार के मतानुसार शनिग्रह का रस कषाय तथा मंगल का तिक्त है । इस प्रकार यहाँ भुवनदीपक से दो ग्रहों की रस मान्यता में स्पष्ट अन्तर दिखलाई पड़ता है । इन्होंने भी बुध का रस मिश्रित माना है जो ताजिकनीलकण्ठी से मिलता है ।

ग्रहरसचक्र–

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| सूर्य | चन्द्र | मंगल | बुध | गुरु | शुक्र | शनि | राहु |
| कटु | नमकीन | कटु | कषाय | मृदु | खट्टा | तीक्ष्ण | तीक्ष्ण |

अथ ग्रहाणां धातुमूलजीवसंज्ञा—

**मन्देन्दूरगभौमाः स्युर्धातुः सवितृभार्गवौ।**
**मूलं जीवश्च सौम्यश्च जीवं प्राहुर्महाधियः ।। २८ ।।**

**दीप्तिः**–मन्देदूरगभौमाः शनिचन्द्रमंगलग्रहाः धातुः स्युः । एतेषां चतुर्णां ग्रहाणां धातु संज्ञा भवति । सवितृभार्गवौ सूर्यशुक्रौ मूलसंज्ञकौ भवतः जीवश्च बृहस्पतिश्च सौम्यश्च बुधश्च जीवसंज्ञकौ भवतः । ग्रहाणामेता संज्ञा महाधियो विद्वांसः प्राहुः कथयन्ति ।

नीलकण्ठेन धातुमूलजीवसंज्ञावर्णने भट्टोत्पलस्य मतमेवाङ्गीकृतम्–

बलिनौ केन्द्रोपगतौ रविभौमौ धातुकरौ प्रश्ने ।
बुधसौरी मूलकरौ शशिगुरुशुक्राः स्मृता जीवाः ।।[१]

पद्मप्रभुसूरिभट्टोत्पलयोर्मध्ये सामान्यमन्तरं दृश्यते । अस्याः संज्ञायाः किं प्रयोजनमित्याकाँक्षायां मौष्टिके किं विद्यते ? मे मनसि कस्य वस्तुनः वलीयसी चिन्ताजागर्ति प्रभृतिषु प्रश्नेषु विधानस्यावश्यकता भवति ।

**हिन्दी**–शनि, चन्द्र, राहु और मंगल की धातु संज्ञा, सूर्य और शुक्र की मूल संज्ञा तथा बृहस्पति और बुध की जीव संज्ञा बुद्धिमान गणकों ने की है ।

इन संज्ञाओं का प्रयोग प्रश्नकालिक लग्न के द्वारा मुष्टिस्थित या मनः स्थित प्रश्न के समाधानार्थं किया जाता है तो प्रश्नकर्त्ता को तत्सम्बन्धी विषय की ही चिन्ता होती है ।

शनि, चन्द्र, राहु और मंगल में से कोई एक भी ग्रह यदि प्रश्नकुण्डली के लग्न में बैठा हो या उसे देखता हो तो प्रष्टा को धातु की चिन्ता होती है । धातु वर्ग में स्वर्ण, ताम्बा, रजत, कांस्य, लोहा, कोयला, रत्न, पत्थर, पीतल एवं भूगर्भोत्पन्न अन्य खनिज आते हैं ।

मूलवर्ग में जड़े, वृक्ष, घास, काष्ठ, लतायें, औषधियाँ तथा विविध धान्य आते हैं । जीववर्ग में अण्डज, पिण्डज श्वेदज, आते हैं । इनमें भी द्विपद, चतुष्पद तथा अपद या सरीसृप अर्थात् सरक कर चलने वाले जीव आते हैं । इस प्रकार इन तीनों संज्ञाओं के भी सूक्ष्म भेद होते हैं । इनके द्वारा बुद्धिमान् गणक प्रष्टा की चिन्ता का उद्घाटन करता है ।

अथ ग्रहाणां द्विपदादिसंज्ञा—

**द्विपदौ भार्गवगुरू भौमार्कौ च चतुष्पदौ।**
**पक्षिणौ बुधसौरी च चन्द्रराहू सरीसृपौ ।। २९ ।।**

**दीप्तिः**–जीववर्गे समागतानां ग्रहाणां द्विपदचतुष्पदादि-संज्ञात्मकंज्ञानं निरूप्यते भार्गवगुरू शुक्रबृहस्पति द्विपदौ, भौमार्कौ मंगलसूर्यौ च चतुष्पदौ, बुधसौरी ज्ञशनी पक्षिणौ खगौ चन्द्रराहु विधुसैंहिकेयौ च सरीसृपौ सर्पौ भवतः । सरीसृप अपदः स्मृतः अनया व्यवस्थया जीवज्ञानानन्तरं ग्रहेभ्यो द्विपदचतुष्पदपक्षिण ज्ञातुं शक्यते द्विपदेषु मानवाः, राक्षसाः, यक्षादयो वागच्छन्ति। चतुष्पदेषु अश्वहस्तिगवां प्रभृतीनां समाहारो भवति । पक्षिषु काककोकिलचटकामयूरपोदकीनां समाहारो ज्ञेयः । सरीसृपेषु अपदा आगच्छन्ति।

**हिन्दी**–शुक्र और बृहस्पति द्विपद संज्ञक, मंगल और सूर्य चतुष्पदसंज्ञक, बुध और शनि पक्षी संज्ञक तथा चन्द्रमा और राहु सरीसृपसंज्ञक कहे गये हैं ।

पूर्वोक्त श्लोक के आधार पर धातु, मूल तथा जीव संज्ञाओं में से जीव संज्ञा का निर्धारण हो जाने पर इस श्लोक के द्वारा और अधिक सूक्ष्म भेद प्रदर्शित किया जा रहा है । शुक्र और बृहस्पति ग्रह में से कोई एक या दोनों यदि लग्न में हों या लग्न को देख रहे हों तो नष्टादि वस्तु को लेने वाला व्यक्ति द्विपद होगा । इसी प्रकार नष्ट प्रश्न के अतिरिक्त भी जहाँ कहीं जीव निर्धारण की आवश्यकता पड़े वहाँ इस श्लोक को आधार मान कर सूक्ष्म भेद किया जा सकता है ।

सूर्य और मंगल ग्रह यदि लग्न से युक्त या सम्बद्ध हों तो जीव चतुष्पद होगा । प्रश्नकुण्डली में जीव संज्ञा होने पर इन दोनों ग्रहों की प्रधानता से चतुष्पद का बोध होता है । इसी प्रकार बुध और शनि लग्न को प्रभावित कर रहे हों तो जीव पक्षी होगा और स्थलचर राशि के आधार पर बुध और शनि की प्रधानता से पक्षियों के भी जल और स्थल निवास की स्थिति ज्ञात हो जाती है । कर्क, वृश्चिक, कुम्भ मकर तथा मीन राशियाँ जलचर होती हैं शेष स्थल प्रधान ।

चन्द्रमा और राहु ग्रह का प्रश्न लग्न से सम्बन्ध हो तो सरीसृप जीव होता है । सरीसृप जीव में प्रधान सर्प होता है । चन्द्रमा की प्रधानता होने पर सरीसृप विषैला नहीं होगा, परन्तु कोई पाप ग्रह उसे देख रहा हो तो विषैला होगा। सरीसृपों में सर्प, केचुला घोंघा छिपकली और पेट के बल रेंगने वाले जानवर आते हैं । इन्हें 'रेपटाइल' वर्ग के जीव कहते हैं, अर्थात् क्रीपिंग एनिमल। जातक पारिजात के अनुसार सूर्य पक्षी तथा शनि चतुष्पद है ।

धातुमूलजीवसंज्ञाचक्र

| सूर्य | चन्द्र | मंगल | बुध | गुरु | शुक्र | शनि | राहु |
|---|---|---|---|---|---|---|---|
| मूल संज्ञक | धातु शंज्ञक | धातु संज्ञक | जीव संज्ञक | जीव संज्ञक | मूल संज्ञक | धातु संज्ञक | धातु संज्ञक |

जीवसंज्ञान्तर्गत द्विपदादिबोधकचक्र—

| सूर्य | चन्द्र | मंगल | बुध | गुरु | शुक्र | शनि | राहु |
|---|---|---|---|---|---|---|---|
| चतुष्पद संज्ञक | सरीसृप संज्ञक | चतुष्पद संज्ञक | पक्षी संज्ञक | द्विपद संज्ञक | द्विपद संज्ञक | पक्षी संज्ञक | सरीसृप संज्ञक |

अथ ग्रहाणां जातिनिरूपणम्—

**विप्रौ शुक्रगुरु क्षत्रौ कुजार्कौ शूद्र इन्दुजः।**

**इन्दुर्वैश्यः स्मृतौ म्लेच्छौ सैंहिकेयशनैश्चरौ ।। ३० ।।**

**दीप्तिः**—ज्यौतिषशास्त्रे पञ्चधा जातिव्यवस्था विद्यते । विप्र-क्षत्र-वैश्य-शूद्र-म्लेच्छा ग्रहाः स्वजातिगुणसदृशाः जातकानां गुणस्वभावदोषाः प्रकटयन्ति ।

शुक्रगुरू भृगुजीवौ विप्रौ ब्राह्मणौ, कुजार्कौ सूर्यभौमौ क्षत्रौ क्षत्रियौ, इन्दुजो बुधः शूद्र इन्दुश्चन्द्रो वैश्यः, सैंहिकेयशनैश्चरो राहुशनी म्लेच्छौ चाण्डालौ स्मृतौ कथितौ ।

ग्रहाणां जातिव्यवस्थायां वराहिमिहिरेण राहोश्चर्या न विहिता । अमुनाचार्येण पञ्चधा जातिव्यवस्था प्रतिपादिता—

विप्रादितः शुक्रगुरु कुजार्कौ शशी बुधश्चेत्यसितोऽन्त्यजानाम्[१]

सत्याचार्येण ग्रहाणां पञ्चजातिभेदाः स्वीकृताः । अनेनान्त्यजस्य स्थाने संकरशब्दस्य प्रयोगकृतः तद्यथा—

गुरुशुक्रौ रविरक्तौ चन्द्रः सौम्यः शनेश्चरश्चेति ।

विप्रक्षत्रियविट्शूद्रसंकराणां प्रभुत्वकराः ।।

**हिन्दी**—ज्यौतिष शास्त्र के अनुसार ग्रहों का वर्ण निरूपण उनकी रश्मियों के गुणधर्म के आधार पर किया गया है । जातक की कुण्डली में लग्नपति जिस वर्ण का ग्रह होगा उस जातक का स्वभाव भी वैसा ही होगा । अतः यहाँ ग्रहों का वर्ण निर्देशित किया जा रहा है —

शुक्र और बृहस्पति ब्राह्मण, मंगल और सूर्य क्षत्रिय, चन्द्रमा वैश्य, बुध शूद्र तथा शनि और राहु म्लेच्छ वर्ण के होते हैं ।

नष्ट वस्तु के ज्ञान में ग्रहों के वर्ण के अनुसार ही अपहर्त्ता की जाति कही जाती है ।

प्राचीनाचार्यो ने ग्रहों की जाति का निरूपण करते समय राहु की चर्चा नहीं की है, परन्तु बाद के गणकों ने राहु को शनिवद् मान कर उसका भी समावेश कर लिया है ।

शनि और राहु ग्रह अन्त्यजों तथा म्लेच्छों के प्रतिनिधि माने गये हैं । भट्टोत्पल ने अन्त्यजों के लिए 'वर्णप्रतिलोभभव' शब्द का प्रयोग किया है । उन्होंने इस वर्णेतर वर्ग में चाण्डाल, मागध तथा निषाद आदि जातियों को रखा है।

ग्रहजातिबोधकचक्र—

| सूर्य | चन्द्र | भौम | बुध | गुरु | शुक्र | शनि | राहु |
|---|---|---|---|---|---|---|---|
| क्षत्रिय | वैश्य | क्षत्रिय | शूद्र | विप्र | विप्र | म्लेच्छ | म्लेच्छ |

अथ ग्रहाणां देहस्वरूपणम्—

**स्थूल इन्दुः सितः षण्ढश्चतुरस्त्रौ कुजोष्णगू।**
**वर्तुलौ सौम्यधिषणौ दीर्घौ शनिभुङ्गमौ ।। ३१ ।।**

**दीप्तिः**—इन्दुश्चन्द्रः स्थूलो बृहदाङ्गः, सितः, शुक्रः षण्ढो नपुसंकसंज्ञः कुजोष्णगू भौमसूर्यौ चतुरस्त्रौ चतुष्कोणौ नात्युच्चाङ्गौ न लघू इति भावः । सौम्यधिषणौ बुधबृहस्पती वर्तुलौ वृत्ताकारौ भवतः । शनिभुजङ्गमौ शनिराहू दीर्घौ लम्बाकृतियुतौ स्मृतौ । बलयुक्तो ग्रहो मूर्तौ भवति मूर्ति पश्यति वा तदा तस्य ग्रहस्याकृति इव प्रष्टुरभीष्टस्य नरस्य आकृतिर्भवति ।

**हिन्दी**—जीव वर्ग के अन्तर्गत द्विपदादि ज्ञान के अनन्तर जाति की जानकारी की विधि बतलाई गई है । इस श्लोक के द्वारा उस मनुष्य (नष्ट या अपहृत वस्तु को लेने वाले) की देह स्थिति बतलाई जा रही है ।

चन्द्रमा स्थूल (मोटा) शरीर, शुक्र नपुंसक, मंगल और सूर्य चतुरस्त्र अर्थात् न ज्यादा लम्बा न ज्यादा चौड़ा, बुध और बृहस्पति वर्तुल (गोला स्वरूप) तथा शनि और राहु दीर्घ [लम्बा चौड़ा] शरीरधारी होते हैं ।

इन ग्रहों के आधार पर नष्ट वस्तु आदि के अपहर्त्ता मनुष्य की शरीराकृति का ज्ञान होता है । जो ग्रह बली होकर लग्न को देखता हो या स्थित हो तो उसी ग्रह की आकृति सदृश उस मनुष्य की आकृति होती है । शुक्र ग्रह

बालक तथा वृद्ध का ज्ञापक होता है, क्योंकि इनमें कामभाव की हानि देखी जाती है । अत: 'षण्ढ' पद से इनका ग्रहण होता है । यहाँ 'षण्ढ' का प्राकरणिक अर्थ निर्वीर्य [नपुंसक] होगा ।

अथ ग्रहाणां वर्णस्वरूपनिरूपणम्—

**रक्तवर्ण: कुज: प्रोक्तो धिषण: कनकद्युति:**
**शुकपिच्छसम: सौम्यो गौरकान्तिरथोष्णगु: ।। ३२ ।।**
**मन्दारार्कस्य पुष्पेण समद्युतिरनुष्णगु:।**
**कविरत्यन्तधवल: फणी कृष्ण: शनिस्तथा ।। ३३ ।।**

**दीप्ति:**—ग्रहाणां स्वरूपपज्ञानेन अन्यवस्तुन: स्वरूपं ज्ञातुं शक्यते । अत इदानीं ग्रहाणां वर्णो निरूप्यते—अथ कुजो भौमो रक्तवर्णो रुधिरवर्ण: प्रोक्त:, धिषणो बृहस्पति: कनकद्युति: स्वर्णकान्ति:, सौम्यो बुध: शुकपिच्छसमो हरितवर्ण:, उष्णगु: सूर्यो गौरकान्ति:, अनुष्णगुश्चन्द्रो मन्दारार्कस्य मन्दार: कल्पवृक्षस्तदभावे अर्कपुष्पं तस्य मन्दारार्कस्य पुष्पेण कुसुमेन समद्युति: अर्कपुष्पमिव कान्ति: शुभ्र इत्यर्थ: । कवि: शुक्र अत्यन्तधबल: श्वेत: फणीशनिस्तथा कृष्ण अतिश्यामवर्ण: ।

भुवनदीपकवृत्तौ बुधस्य वर्णने "शुकपिच्छसम:" शब्दस्यार्थो 'नीलकान्ति:' कृत: । तन्न मयाभिमतं यतो बृहत्संहितायां सन्ध्यावर्णनाध्याये—'हरिता: शुकवर्णा:' तथाच लोकेऽपि शुको हरितवर्णो दृश्यते।

**हिन्दी**—मंगल रक्त (लाल) वर्ण, बृहस्पति सुनहला, बुध तोता की पूँछ की तरह हरितवर्ण, सूर्य गौर वर्ण, चन्द्रमा कल्पवृक्ष [मन्दार] के पुष्प की तरह शुभ्र वर्ण, शुक्र अत्यन्त धवल वर्ण एवं राहु तथा शनि कृष्ण वर्ण के होते हैं ।

ग्रहों के वर्ण सन्दर्भ में आचार्यों में मतभेद है । वराहमिहिर ने सूर्य को 'रक्तश्यामो भास्कर:' कहा है अर्थात् हल्का लाल' परन्तु भट्टोत्पल ने टीका में रक्तश्याम के लिए 'पाटलपुष्प वर्ण इत्यर्थ:' कहा है जो सर्वथा असंगत है । 'श्वेतरक्तस्तु पाटल:' के अनुसार उजला और लालवर्ण का मिश्रण पाटल कहलाता है । पराशर भी सूर्य को रक्तश्याम वर्ण का मानते हैं—'रक्तश्यामो

दिवाधीशः ।' वस्तुतः सूर्य का रंग प्रत्येक ऋतु में बदलता है जिसका संहिताओं में उल्लेख मिलता है । चन्द्रमा को सभी आचार्यों ने गौरवर्ण का माना है । जातकपारिजातकार [वैद्यनाथ] तथा बृहज्जातककार ने मंगल को रक्तगौर वर्ण [पाटल] माना है । शेष आचार्यों ने इसे केवल रक्त वर्ण का कहा है । बुध को प्रायशः आचार्यों ने हरित वर्ण का माना है, परन्तु नीलकण्ठीकार ने इसे नील वर्ण का कहा है । पद्मप्रभूसूरि, नीलकण्ठ, वैद्यनाथ तथा अन्य आचार्यों ने गुरु को पीत वर्ण का माना है, परन्तु पराशर और वराहमिहिर के मत से गुरु गौरवर्ण का है । शुक्र ग्रह को नीलकण्ठ तथा भुवनदीपककार श्वेत वर्ण का मानते हैं जबकि पराशर, वराहमिहिर तथा वैद्यनाथ ने इसे श्याम माना है । शनि को सभी आचार्यों ने कृष्णवर्ण का माना है परन्तु नीलकण्ठ ने इसे नीलवर्ण का माना है ।

प्रश्नकुण्डली से किसी वस्तु या व्यक्ति के स्वरूप को जानने के लिए ग्रहों का वर्ण ज्ञान आवश्यक होता है । लग्न जिस ग्रह से दृष्ट या युक्त होगा वस्तु या व्यक्ति का वर्ण भी वही होगा । इसके आधार पर नष्ट या प्राप्तव्य वस्तु के वर्ण को जाना जा सकता है ।

अथ ग्रहाणामधिकारविशेषः—

**अवनीशो दिनमणिस्तपस्वी रोहिणीप्रियः।**<br>
**स्वर्णकारः क्षितेः पुत्रो ब्राह्मणो रोहिणीभवः ।। ३४ ।।**<br>
**वणिग्गुरुः कविर्वैश्यो वृषलः सूर्यनन्दनः।**<br>
**सैंहिकेयो निषादश्च सर्वकार्येषु सम्मतः ।। ३५ ।।**

**दीप्तिः**—दिनमणिः सूर्य अवनीशो क्षत्रियो वा रोहिणीप्रियश्चन्द्रः तपस्वी तपः कर्त्ता, क्षितेः पुत्रो धरानन्दनो भौमः स्वर्णकारः, रोहिणीभवो बुधो ब्राह्मणो विप्रो गुरुबृहस्पतिर्वणिक् कविः शुक्रो वैश्य अतिधनीति शेषः । सूर्यनन्दनः शनिर्वृषलो दास अनुचरो वेति । एवमेव सैंहिकेयो राहुश्चाण्डालो हिंसको निषाद इति । जीवचिन्तायां सर्वेषु शुभाशुभकार्येषु वेति ग्रहाणां जातिविशेषो ज्ञेयः ।

सूर्यो ग्रहाणामधीशः । चन्द्रमा अत्रेः पुत्रस्तस्माद् हेतोः तपस्या तस्योपवृत्तिरिति । भौमः स्वर्णकारो विद्यते । अतोऽयं पश्यन्नेव सर्वं हरति । बुधो ब्रह्मणः । अध्ययनमधापनं तस्य धर्म उक्तम् । बृहस्पतिर्वणिक् तस्मादसौ

कृपणो ज्ञेय: । शुक्रो वैश्य: । अयमतिधनी वेद्य: । शनैश्चरो दासो भृत्यो वा सदैव सेवारत: कथित: । राहु अतीव निम्नवर्ण अस्पृश्य: ।

**हिन्दी**–सूर्य राजा, चन्द्रमा तपस्वी, मंगल स्वर्णकार, बुध ब्राह्मण, बृहस्पति वणिक्, शुक्र वैश्य, शनि भृत्य तथा राहु निषाद माना गया है । इसका विचार सभी कार्यों में किया जाता है ।

सूर्य राजा ग्रह है । कुण्डली में इसकी प्रधानता के कारण जातक शासन करने में सक्षम, आज्ञा देने वाला तथा समर्थ होता है ।

चन्द्रमा ग्रह की प्रधानता के कारण जातक त्यागी और परोपकार की भावना से युक्त होता है । आस्तिकता, मुनिवृत्ति, जलीयपदार्थों से लगाव, कृषि से उत्पन्न चीजों के प्रति प्रेम प्रभृति विषयों का उत्प्रेरक ग्रह चन्द्रमा ही होता है ।

मंगल का स्वर्णकार होने का तात्पर्य है धातुकर्म से जीवनवृत्ति चलाने वाला । इस ग्रह की प्रधानता से व्यक्ति साहसी, चौरवृत्ति वाला, रणोत्सुक तथा दु:साहसी होता है ।

बुध ग्रह की प्रधानता वाले जातक सात्विक वृत्ति वाले होते हैं । इनमें भी परार्थ भाव रहता है । अध्ययन-अध्यापन, शिल्प, काव्यागम धर्मशास्त्र आदि का उच्चानुशीलन इनका जीव्य होता है ।

बृहस्पति को आचार्य पद्मप्रभुसूरि ने व्यापारी माना है अर्थात् इस ग्रह की प्रधानता से जातक व्यापार कर्म में दक्ष होता है । अन्य आचार्यों ने बृहस्पति से प्रभावित जातक के लिए देवोपासक, अध्यापक तथा धर्मोपदेशक आदि होना कहा है ।

शुक्र का वैश्य ग्रह होने का आशय है–सेवा प्रधान ग्रह । कृषिकर्म, दुग्ध, सुवर्णमाणिक्य क्रय-विक्रय, तथा श्वेत वस्तुओं के व्यापार से यह जीविका चलाता है ।

शनि भृत्य ग्रह है । इसकी प्रधानता वाला जातक नौकरी करने वाला, भारवाही तथा आज्ञा मानने वाला होता है । इसका शिल्प कला में भी सम्बन्ध होता है ।

राहु चाण्डाल ग्रह है । इस ग्रह की प्रधानता वाला जातक दुष्ट, अपराधी, समाज विरोधी, पर्यटक तथा दस्यु आदि होता है । अपराधिक वृत्तियों से जीविका चलाने वाले लोग राहु प्रधान होते हैं ।

अथ ग्रहाणां धातुचिन्ताविशेषमाह—

**शुक्रे चन्द्रे भवेद्रौप्यं बुधे स्वर्णमुदाहृतम्।**
**गुरौ रत्नयुतं हेम सूर्ये मौक्तिकमुच्यते ।। ३६ ।।**
**भौमे त्रपु शनौ लौहं राहावस्थीनि कीर्तयेत्।**
**धातोर्विनिश्चये ज्ञाते विशेषोऽस्मादुदाहृतः ।।३७ ।।**

**दीप्तिः**—शुक्र भार्गवे चन्द्रे विधौ च लग्नस्थिते लग्नदृष्टे वा तदा धातूनां मध्ये रौप्यं रजतं [तत्सम्बन्धिनं वा] भवेत् । बुधे ज्ञे स्वर्णं कनकमुदाहृतं कथितम्। गुरौ बृहस्पतौ रत्नयुतं हेममणिमाणिक्यवज्रादियुक्तं हेम स्वर्णं, सूर्ये दिननायके मौक्तिकं मुक्तारत्नम् उच्यते कथ्यते । भौमे मङ्गले त्रपु:सीसकम् । रङ्गसीसकयोस्त्रपु इति रुद्रः । अग्निं दृष्ट्वा त्रपते लज्जते इव । शनौ मन्दे लौहमयः । राहौ सैंहिकेये अस्थीनि अस्थिप्रभृतीनि कीर्तयेत् कथयेत् पण्डित इति शेषः । एवमेव धातोर्विनिश्चये जाते अस्मात् कथित प्रकारात् धातोर्विशेषस्य निर्णये जाते ज्ञाते सति उदाहृतः कथितः । अत्र भावो ज्योतिर्विद्भिः ग्रहाणां प्रभावज्ञानपूर्वकं धातोर्विशेषस्य फलं निर्देष्टव्यमिति ।

**हिन्दी**—धातु मूल एवं जीव के निर्धारण के पश्चात् ग्रहों द्वारा लक्षित विशेष धातुओं का ज्ञान निर्देशित है—

शुक्र और चन्द्रमा होने पर रौप्य अर्थात् चाँदी, बुध के होने पर स्वर्ण, गुरु के स्थित होने पर रत्नजटित स्वर्ण, सूर्य के होने पर मौक्तिक [मोती], मंगल के होने पर त्रपु अर्थात् रांगा, टीन या शीशा, शनि के होने पर लोहा, पत्थर आति तथा राहु के होने पर अस्थि कहना चाहिए । यह धातु का विशेष प्रकार धातु संज्ञा के निश्चय होने के बाद कहा गया है ।

बुद्धिमान् गणक धातु निश्चय हो जाने के पश्चात् ग्रहों के आधार पर विशिष्ट धातुओं का आदेश करते हैं । यदि लग्न में ग्रह स्थित हो या लग्न को देखता हो तो उसके आधार पर विशेष धातुओं का निर्देश किया जाता है । शुक्र

और चन्द्रमा ग्रह चाँदी धातु को इंगित करते हैं । बुध स्वर्ण एवं तत्सम्बन्धी आभूषणों को बतलाया है । बृहस्पति ग्रह रत्न जटित आभूषणों को निर्देशित करता है । सूर्य से मोती या मोती युक्त आभूषण का बोध होता है । मंगल ग्रह त्रपुस् धातु का ज्ञापक है । त्रपुस् धातु में अग्नि देख कर पिघलने वाले पदार्थ आते हैं, जैसे–टीन, रांगा, शीशा आदि । मंगल ग्रह से इन धातुओं का बोध होता है । शनि ग्रह लोहा तथा पत्थर को इंगित करता है । राहु अस्थि तथा हाथी दाँत से रचित वस्तुओं को सूचित करता है ।

प्रश्नकर्त्ता के मन में स्थित धातु को ग्रह के आधार पर बतलाने हेतु इस श्लोक को कहा गया है ।

अथ ग्रहाणां स्थानविशेषनिरूपणम्—

**शुर्के चन्द्रे जलाधारो देवतावसतिर्गुरौ।**
**रवौ चतुष्पदस्थानमिष्टिकानि चयो बुधे ।। ३८ ।।**
**दग्धस्थानं कुजे प्रोक्तं शनौ राहौ च बाह्यभूः।**
**अमीभिर्हिबुकस्थाने नष्टभूमिं विलोकयेत् ।। ३९ ।।**

**दीप्तिः**–शुक्रे भृगौ चन्द्रे विधौ वा लग्ने स्थिते लग्ने दृष्टे वा जलाधारो जलाशयो ज्ञेयम् । गुरौ बृहस्पतौ देवतावसति देवतास्थानञ्च रवौ चतुष्पदस्थानं गोष्ठादिकं ज्ञेयमिष्टकानिचय इष्टिकासमूहः पषाणादिकानां स्थानं वा बुधे ज्ञे वाच्यम् । कुजे भौमे दग्धस्थानमग्निना दग्धं स्थानं प्रोक्तं कथितम् । शनौ राहौ च शनिराह्वोः ब्राह्मम् उस्त्रानपर्वतादिः, अथवा बहिर्भूर्मलस्थानमिति शेषः । अमीभिः सूर्यादिग्रहैः सर्वं ज्ञात्वा हिबुकस्थाने चतुर्थंस्थाने निधनादिपृच्छायां 'क्वगतं मम वस्तु' इति प्रश्नो वा यदि चतुर्थंस्थाने लग्नेशो वान्यो ग्रहो भवति तदा नष्टभूमि नष्टवस्तुस्थानं वक्तव्यमिति भावः ।

**हिन्दी**–शुक्र और चन्दम्रा के [लग्न] स्थित होने पर या देखने पर जलाशय के समीप, बृहस्पति के होने पर देवालय, सूर्य के होने पर चतुष्पदस्थान अर्थात् गोष्ठ, बुध के होने पर ईंट या पत्थर के समूह के समीप, मंगल के होने पर दग्धस्थान रसोई घर, हवनकुण्ड या जहाँ आग से जला अवशेष हो, शनि और राहु के होने पर बाह्यभूमि खेत, जंगलादि में नष्ट या

अपहृत वस्तु को जानना चाहिए । इन ग्रहों अर्थात् सूर्यादि नवग्रहों के चतुर्थ स्थान में विद्यमान होने पर नष्टवस्तु के स्थान को बदलना चाहिए । आशय है कि लग्नेश या अन्य कोई ग्रह चतुर्थ स्थान में स्थित हो या उसे देखता हो तो नष्ट वस्तु को उस ग्रह के स्थान में रखा हुआ बतलाना चाहिए ।

इन दोनों श्लोकों के माध्यम से घर से भाग कर गया भूला व्यक्ति, अपहृतव्यक्ति, अथवा चुराई हुई वस्तु के मिलने के स्थान को निर्दिष्ट किया गया है ।

लग्न के साथ ही साथ चतुर्थ स्थान में कोई ग्रह स्थित हो या उसे देखता हो तो उस ग्रह के स्थान में भी वस्तु प्राप्ति का निर्देश देना चाहिए ।

आचार्य नीलकण्ठ ने भी चतुर्थस्थान के ही आधार पर नष्टवस्तु के स्थान की सूचना दी है, यथा—

अथ चतुर्थगृहे तुर्येश्वरोऽथ यः स्याद् ग्रहस्ततो ज्ञेयम् ।
मन्दे मलिनस्थाने चन्द्रेऽम्बुनि गीष्पतौ सुरारामे ।।
भौमे वह्निसमीपे रवौ गृहाधिश्वरासनस्थाने ।
तल्पे शुक्रे सौम्ये पुस्तकवित्तान्नयानपार्श्वे च ।।

भुवनदीपककार ने राहु और शनि के स्थान के लिए "बाह्यभूः" पद का प्रयोग किया है । बाह्यभू का पर्याय मलिनस्थान भी होता है । इस प्रकार पद्मप्रभुसूरि का मत प्रश्नशास्त्र सम्भत है तथापि बुध ग्रह निर्दिष्ट स्थान तथा शुक्र स्थान में किञ्चिद् भेद भी दिखलाई पड़ता है ।

अथ ग्रहाणां स्त्रीपुरुष विभागमाह—

**जीवमङ्गलमार्तण्डान्वदन्तिपुरुषान्बुधाः ।**
**सोमसोमजमन्दाहिभृगुपुत्रांश्च योषितः ।। ४० ।।**

**दीप्तिः**—चौरादि ज्ञाने पुरुषः स्त्री वेति निर्णयाय अत्र श्लोकः प्रस्तूयते—

बुधाः गणकप्रवराः जीवमङ्गलमार्तण्डान् बृहस्पतिभौमसूर्यात् ग्रहान् पुरुषा नरसंज्ञका वदन्ति कथयन्ति । सोमसोमजमन्दाहिभृगुपुत्रांश्च चन्द्रबुधशनिराहुशुक्रग्रहान् योषितः स्त्रीसंज्ञकान् वदन्तीति ।

पुरुषग्रहाणां मध्ये कश्चिदेकोऽपि लग्नस्थो लग्नं वा पश्यति तदा चौराः नष्टवस्तुन अपहर्त्तारः पुरुषसंज्ञकाः भवन्ति । यदि पुरुषग्रहा अनेके तदा नरोऽपि बहवो भवन्ति । एवमेव स्त्रीसंज्ञका ग्रहाश्चेल्लग्नस्थानस्तदा नष्टवस्तूनि स्त्रीगहस्तङ्गतानि वाच्यानीति भावः ।

**हिन्दी**—बुद्धिमान् गणक बृहस्पति, मंगल तथा शनि को पुरुष संज्ञक तथा चन्द्रमा, बुध, शनि, राहु और शुक्र को स्त्री संज्ञक ग्रह कहते हैं ।

कुछ आचार्य शनि तथा बुध को नपुंसक ग्रह मानते हैं ।[१] इन दोनों ग्रहों की प्रधानता होने पर बालक या वृद्ध का बोध होता है । ग्रहों के पुरुष और स्त्री वर्गीकरण से जहाँ कहीं भी पुरुष और स्त्री पृथकता बोध की आवश्यकता पड़ती है–इसका निराकरण हो जाता है ।

अथ ग्रहाणां वयोनुमानस्वरूपमाह—

**युवा कुजः शिशुः सौम्यः शशिशुक्रौ च मध्यमौ ।**
**मन्दमार्तण्डदेवेज्यफणिनः स्थविरा ग्रहाः ।। ४१ ।।**

**दीप्तिः**—कुजो भौमो युवा तरुणः, शिशुर्बालकः सौम्यो बुधः, शशिशुक्रौ चन्द्रभार्गवौ मध्यमौ प्रौढौ, चत्वारिंशत्पञ्चाशद् वा वर्षस्य अवधिर्मध्यमावस्था भवति । मन्दमार्तण्डदेवेज्यफणिनः शनिसूर्यबृहस्पतिराहवः स्थविरा वृद्धा ग्रहा भवन्ति ।

ग्रहाणां वयो ज्ञानेन चौराणामपि वयः कथितुं शक्यते । यदि चतुर्थस्थाने मेषो वृश्चिको वा राशिर्भवति तदा चौरो युवा वाच्यः । एवमेवान्यग्रहैरपि वयो ज्ञानं कर्तुं शक्यते ।

प्रश्नलग्ने स्थितानां ग्रहाणां ज्ञानेन चौराणामायुर्ज्ञाने आचार्यनीकण्ठोऽपि स्वाभिमतं प्रस्तौति—

चौरस्य वयो ज्ञाने सिते युवा ज्ञे शिशुर्गुरौमध्यः ।
तरुणो भौमे मन्दे वृद्धोऽर्के स्यादतिस्थविरः ।।[२]

अत्र विशेषभेदो न लक्ष्यते ।

**हिन्दी**—मंगल तरुण, बुध बालक, चन्द्रमा तथा शुक्र मध्यम आयु (अधेड़) शनि, सूर्य, गुरु तथा राहु वृद्ध अवस्था वाले ग्रह कहे गये हैं ।

इन ग्रहों की अवस्था ज्ञान के आधार पर चोर की अवस्था बतलाई जाती है । पहले के श्लोकों में चोर की जाति तथा स्वरूपादि का वर्णन किया जा चुका है ।

चन्द्रमा तथा शुक्र मध्यम आयु प्रमाण वाले ग्रह हैं । यदि चतुर्थ स्थान में इनकी राशि हो तो चोर को चालीस से पचास वर्ष की आयु वाला समझना चाहिए । स्थविर का अर्थ वृद्ध होता है । पचास से ऊपर की आयु वाला ही व्यक्ति स्थविर संज्ञक हो सकता है ।

अथ ग्रहाणां प्रकृतिस्वरूपम्—

**भौममन्दार्कभोगीन्द्राः प्रकृत्या दुःखदानृणाम्।**

**ज्ञगुरुश्वेतकिरणशुक्राः सुखकराः सदा ।। ४२ ।।**

**दीप्तिः**—भौममन्दार्कभोगीन्द्राः मङ्गलशनिसूर्यराहवः प्रकृत्या स्वभावेन नृणां लोकानां दुःखदा कष्टदायका भवन्ति । क्रूरत्वमत्र कारणम् । ज्ञगुरुश्वेतकिरणशुक्राः बुधबृहस्पतिचन्द्रभार्गवाः सदा अहर्निशं सुखकराः सौख्यदायका भवन्ति । सौम्यप्रकृतिरत्र कारणभूता ।

सामान्यवचनमप्यत्रोपलभ्यते—

गुरुश्चन्द्रो बुधः शुक्रः शुभा वाराः शुभे स्मृताः ।

क्रूरास्तु क्रूरकृत्येषु ग्राह्या भौमार्कसूर्यजाः ।।

**हिन्दी**—मंगल, शनि, सूर्य और राहु (क्रूर ग्रह होने के कारण) प्रकृति (स्वभाव) से मानव को कष्ट देने वाले हैं । बुध, बृहस्पति, चन्द्रमा तथा शुक्र ग्रह हमेशा सुख देने वाले होते हैं ।

क्रूर (पाप) और सौम्य ग्रहभेद का प्रयोजन जातक के स्वभाव की क्रूरता और स्निग्धता जानने हेतु है ।

कतिपय आचार्यों ने क्षीण चन्द्रमा को पाप ग्रह माना है, परन्तु यवनेश्वराचार्यों ने चन्द्रमा को सदा शुभ ग्रह ही माना है–

'मासे तु शुक्लप्रतिपत्प्रवृत्तेराद्ये शशी मध्यबलो दशाहे ।

श्रेष्ठो द्वितीयेऽल्पबलस्तृतीये सौम्येस्तु दृष्टो बलवान् सदैव ।।

इनके मतानुसार चन्द्रमा सर्वदा 'अल्पबली' तथा 'श्रेष्ठ' स्थिति में ही विद्यमान रहता है । वह कभी भी 'पाप' नहीं होता, बल्कि शुभग्रह से दृष्ट होने पर बलवान् होता है ।

भट्टोत्पल के मतानुसार कृष्ण पक्ष की अष्टमी से लेकर शुक्ल पक्ष की अष्टमी पर्यन्त चन्द्रमा क्षीण होता है । 'आयुर्दायविधि' के अनुसार कृष्णपक्ष त्रयोदशी से लेकर अमावास्या तक क्षीण चन्द्र होता है ।

बुधग्रह पापग्रहों के साथ पापफल तथा सौम्य ग्रहों के साथ सौम्य फल देता है । इसकी स्वयं की प्रकृति सौम्य होती है—

क्रूरग्रहोऽर्कः कुजसूर्यजौ च<br>
पापौ शुभाः शुक्रशशाङ्कजीवाः ।<br>
सौम्यस्तु सौम्यो व्यतिमिश्रतोऽन्यै–<br>
र्वगैस्तु तुल्यप्रकृतित्वमेति ।।

**इति ग्रहस्वरूपादिद्वारम् ।**

**अथ भावविचारद्वारम् ।। ७ ।।**

तनुभावनिरूपम्

**रूपलक्षणवर्णानां क्लेशदोषसुखायुषाम् ।**

**वयः प्रणामजातीनां तनुस्थानान्निरीक्षयेत् ।। ४३ ।।**

**दीप्तिः**—रुपं कृष्णगौरपीतात्मकं स्वरुपम्, लक्षणं मशकादिज्ञानम्, वर्णो विप्रक्षत्र वैश्यादिः अतो रुपलक्षणवर्णानां क्लेशदोषसुखायुषां क्लेशो व्यथा, दोषश्छलच्छिद्रादिः सुखं योषितपुत्रधनादिकं सर्वेषामेतेषां क्लेशदोषसुखायुषाम् । वयः प्रमाणं बालकवृद्धतरुणानामायुषामनुमानम्, जातिरपि प्रसिद्धा विद्यत एव । तनुस्थानात् प्रथमात् लग्नाद् वा विचारयेत् ।

प्राश्निकैः सर्वमेतद् विचारणीयं तनुभावादिति भावः । ताजिकनीलकण्ठ्यामपि तनुभावाच्चिन्त्यविषया वर्णितास्सन्ति ।

सौख्यमायुर्वयो जातिरारोग्यं लक्षणं गुणः ।

क्लेशाकृती रूपवर्णास्तनोश्चिन्त्या विचक्षणैः ।। प्रश्नविचाराध्यायः ३२ उक्तं प्रश्नभूषणेऽपि—

स्वरुपलक्षणं चापि वर्णभेदं सुखासुखम् ।

प्रश्नकर्त्तुर्वयोमानं लग्नात्सर्वं विचिन्तयेत् ।। संज्ञाध्याये ।। ७ ।।

**हिन्दी**—मनुष्य का स्वरुप, लक्षण, वर्ण, क्लेश, दोष, सुख, आयु, वयः प्रमाण तथा जाति प्रभृति विषय तनुभाव (लग्न) से विचार करना चाहिए ।

द्वादशभावों से किन-किन विषयों का विचार किया जाता है । इस द्वार में वर्णित है । चोर, प्राश्निक या अन्य किसी व्यक्ति के शरीर से सम्बन्धित प्रत्येक प्रश्न का विचार तनुभाव से किया जाता है ।

स्वरुप का अर्थ है—दीर्घ, लघु, स्थूलादि शरीर । लक्षण में मशा, तिल या शरीर के विशिष्ट लक्ष्म आते हैं । वर्ण से गोरा, गेहुआँ, काला तथा श्यामादि का विचार किया जाता है । क्लेश से मानसिक, आर्थिक, शारीरिक प्रभृति कष्टों का विचार किया जाता है । इसी प्रकार आयु तथा वर्तमान वय का अनुमान भी इसी भाव से किया जाता है ।

तनुभाव लग्न को कहते हैं । यही जातक या प्राश्निक का उदित, लग्न या तनुभाव भी कहलाता है ।

द्वितीय (धन) भावनिरूपणम्

**मणिमुक्ताफलं स्वर्णं रत्नधातुकदम्बकम् ।**

**क्रयाणकार्घसर्वाणि धनस्थानान्निरीक्षयेत् ।। ४४ ।।**

**दीप्तिः**—मणिमुक्ताफलं रत्नभौक्तिकं स्वर्णं रत्नधातुकदम्बकं रत्नं वैदूर्यादिकं धातु अयवयो लौहिदिकानां धातुसंज्ञको भवति । रत्नधातूनां कदम्बकं समूहः । धातोः सप्तसङ्ख्या विदितैव तद्यथा—

''रसासृङ्मांसमेदोऽस्थिमज्जा शुक्राणि धातवः ।"

आधुनिका अनेके धातवः कल्पयन्ति । मणिश्चन्द्रकान्तादिः, रत्नानि वज्रमाणिक्यपुष्परजप्रभृतीनि ।

क्रयाणकानि मञ्जिष्ठादीनि । पूर्वाचार्यैः क्रयाणकानां सङ्ख्या त्रिषष्टिशतपरिमिता स्वीकृता । अतः क्रयाणकानामर्धस्य महर्घसमर्धादेः परिज्ञानमेतानि सर्वाणि धनस्थानाद् द्वितीयभावाद् निरीक्षयेत् विचारयेदिति भावः । ताजिकनीलकण्ठ्यामपि द्वितीयभावाद् किं विचारणीयमेतद्वर्णितं विद्यते—

मुक्ताफलञ्च माणिक्यं रत्नधातुधनाम्बरम् ।

सुहृत्कार्याध्वविज्ञानं वित्तस्थानाद् विलोकयेत् ।। प्रश्नाध्यायः ३ ३

**हिन्दी**—द्वितीय भाव (धनस्थान) से मणि (चन्द्रकान्तादि), मोती, स्वर्ण, रत्न (नीलम, पुखराज, पन्ना, हीरा आदि), धातु (लोहा, ताम्बा प्रभृति) समूह, क्रयाणक (किराना वस्तु मञ्जिष्ठादि), तेजी मंहगी प्रभृति विषयों का विचार किया जाता है ।

क्रयाणक का प्रयोग किराना वस्तु के अर्थ में किया गया है । प्राचीनटीकाकारों ने क्रयाणकों के एक सौ तिरसठ भेद स्वीकार किये हैं ।

अथ तृतीयभावनिरूपणम्—

**भगिनीभ्रातृभृत्यानां दासकर्मकृतामपि।**
**कुर्वीत वीक्षणं विद्वान् सम्यग्दुश्चिक्यवेश्मनि ।। ४५ ।।**

**दीप्ति**:—भगिनी सहोदरी स्वसा वेति तस्याः, भ्रातृ अनुजाग्रजादिः तेषां, भृत्यानां सेवकानाञ्च, दासकर्मकृतामपि सेवाकर्मनिरतानामपि वीक्षणमवलोकनं विद्वान् गणकः सम्यग्रूपेण दुश्चिक्यवेश्मनि तृतीयगृहे कुर्वीत विचारयेदिति । नीलकण्ठ्यामपि—अयमेवश्लोक उदाहृतो विद्यते—तृतीयभावस्य विषयनिरूपणे ।

**हिन्दी**—विद्वान् गणक तृतीय भाव से बहन, भाई, भृत्य तथा दास कर्म करने वालों का सम्यक् अवलोकन कर विचार करते हैं ।

तृतीय भाव को सहज भाव भी कहते हैं । इस भाव के पराक्रम का भी विचार किया जाता है ।

अथ चतुर्थभावनिरूपणम्—

**वाटिकाखलकक्षेत्रमहौषधिनिधीनिह।**
**विवरादि प्रवेशं च पश्येत् पातालतो बुधः ।। ४६ ।।**

**दीप्ति**:—वाटिका प्रसूनस्थली, खलकं धान्यकुट्टनगाहनस्थलम्, क्षेत्रं भूखण्डम् महौषधि महच्च तदौषधं च महौषधम् । 'महौषधं तु शुठ्यां स्याद् विषायां लशुनेऽपि च' इति विश्वः । महौषधिर्दोषस्य भेषजम् । महौषधयोऽष्टशतसङ्ख्याः । निधीन् द्रव्याणि निखातादीनि वा गुफायां प्रवेशोऽपि चतुर्थभावाद् विचारणीयः । गृहप्रवेशोऽप्यस्मात् पातालस्थानाद् ज्ञेयः । धातूनामनेकेऽर्था भवन्ति । अतश्चतुर्थस्थानाद् गणकै एतत्सर्वं सफलं निरीक्षणीयम्।"

**हिन्दी**—विद्वान् गणकों को चतुर्थस्थान से वाटिका (फुलवारी), खलिहान, खेत, महौषधि, निधि (छुपा खजाना) विवर (छीद्र, गुफा या सुरंग) और प्रवेश (गृहादि) का विचार करना चाहिए ।

चतुर्थस्थान माता या भूमि स्थान कहलाता है । वाहन तथा सुखादि अनेक विषयों का भी विचार इसी भाव से होता है ।

अथ पञ्चमभावनिरूपणम्—

**गर्भापत्यविनेयानां मन्त्रसाधनयोरपि ।**

**विद्याबुद्धिप्रबन्धानां सुतस्थानाद्विनिश्चयः ।। ४७ ।।**

**दीप्तिः**—गर्भापत्यविनेयानां गर्भसंततिशिष्याणां मन्त्रसाधनयोरपि आकाशादि गमने सहायभूतायाः मन्त्रविद्यायाः साधनायाश्च विचारः, विद्याबुद्धिप्रबन्धानां विद्या सरस्वती बुद्धिर्मनीषा प्रबन्धः काव्यबन्धः तेषां विनिश्चयो निश्चयः सुतस्थानात् पञ्चमस्थानाद् बुधैर्विधेय इति भावः ।

ताजिकनीलकण्ठ्यामयमेव श्लोक उदाहृतः । प्रश्नभूषणेऽपि सामान्यपरिवर्तनेनायमेव श्लोक उदाहृतः तद्यथा—

गर्भापत्यनयानां वै मन्त्रसन्धानयोस्तथा ।

बुद्धिप्रधानशास्त्राणां विचारः पञ्चमालयात् ।। संज्ञाध्याये ११

**हिन्दी**—पञ्चम भाव (सुतस्थान) से गर्भ, सन्तति, शिष्य, मन्त्र, साधना, विद्या, बुद्धि तथा प्रबन्ध (नवीनकाव्यरचना) का विचार करना चाहिए ।

पञ्चमस्थान सारस्वत क्षेत्र तथा सन्तति क्षेत्र के रूप में ख्यात है ।

अथ षष्ठभावनिरूपणम्—

**सैरिभीरिपुसंग्रामोगवोष्ट्रक्रूरकर्मणाम् ।**

**मातुलातङ्कशङ्कानाम् रिपुस्थानाद्विनिर्णयः ।। ४८ ।।**

**दीप्तिः**—सैरिभी महिषी, कैश्चित् 'चौरभी' पाठः स्वीक्रियते रिपुः शत्रुः सङ्ग्रामो रणः । गौः वृषादिः, उष्ट्रः क्रमेलको लोके 'ऊंट' इति प्रसिद्धः क्रूरकर्मणां छेदभेदमारणमोहनादिनामुग्रकर्मणाम्, मातुलो मातुर्भ्राता आतङ्को भयः, शंका विचिकित्सा प्रभृतीनां विषयाणां विनिर्णयो निश्चयो रिपुस्थानाद् षष्ठस्थानाद् भावाद् वा वाच्यः ।

**हिन्दी**—महिषी, शत्रु, युद्ध, गाय, ऊंट, क्रूर कर्म, मामा, आतंक तथा संशय प्रभृति विषयों का निर्णय षष्ठ स्थान से करना चाहिए ।

षष्ठ भाव से रोग, शत्रु विरोध, झगड़ा, चोट-चपेट, तथा बन्धनादि विषयों का विचार किया जाता है ।

अथ सप्तमभावनिरूपणम्—

**वाणिज्यं व्यवहारं च विवादं च समं परैः ।**
**गमागमकलत्राणि पश्येत् प्राज्ञः कलत्रतः ।। ४९ ।।**

**दीप्तिः**—वाणिज्यं व्यापारं, व्यवहारमादानप्रदानं विवादं कलहं च गमागमकलत्राणि यात्राप्रवृत्तिनिवृत्तिभार्याः परैरन्यैः कलत्रतः सप्तमस्थानतः प्राज्ञः बुद्धिमान्नरः पश्येद् विचारयेत् ।

**हिन्दी**—व्यापार, व्यवहार, विवाद, गमनागमन, और जाया का विचार बुद्धिमान् गणक को सप्तम भाव से करना चाहिए ।

व्यवहार का अर्थ है लेन-देन अथवा द्रव्य स्थिति और द्रव्य वृद्धि । अनुबन्ध सहित उधार लेने के अर्थ में भी व्यवहार का प्रयोग होता है । [तुम मुझे दस किलो चावल दो मैं तुम्हें पन्द्रह किलो लौटाऊंगा इस अनुबन्ध को 'वृद्धि अनुबन्ध' कहते हैं।] यात्रा प्रवृत्ति और निवृत्ति को गमागम कहा गया है ।

सप्तम स्थान के द्वारा विवाह, पत्नी सङ्ख्या, प्रेम विवाह, पत्नी की प्रकृति और उसका स्वरूप तथा रति प्रभृति विषयों का भी विचार किया जाता है।

अथाष्टमभावनिरूपणम्—

**नद्युत्तारेऽध्ववैषम्ये दुर्गे शात्रवसंकटे।**
**नष्टे दष्टे रणे व्याधौ छिद्रे छिद्रं निरीक्षयेत् ।। ५० ।।**

**दीप्तिः**—नद्युत्तारे नद्युत्तरणे, अध्वनो वैषम्यमध्ववैषम्यं तस्मिन्, मार्गसंकटे । त्रिविधो मार्गो भवति जलस्थलाकाशभेदात् । दुर्गे राजभवने अर्थाद् अष्टमस्थानाद् दुर्गस्य भङ्गो विचारणीयः । शात्रवसंकटे समुत्पन्ने शत्रुसङ्कटे, बन्धमोक्षयोः प्रश्नस्य समुत्पन्ने, नष्टे स्वयमेव गते वस्तुनि चोरगृहीते वा, दृष्टे सर्पादिना दंशिते सति, केचन 'दंष्ट्रे' इति भेदं स्वीक्रियन्ते तन्न ममाभिमतं यतो दंष्ट्रा शब्दो दशनार्थवाचकः । 'दशि दंशनस्पर्शनयोः' इति । रणे युधे व्याधौ रुजि छिद्रे डाकिनीशाकिनी भैरवीब्रह्मराक्षसादिदोषगृहीते, एतेषु विषयेषु समुपस्थितेषु छिद्रमष्टस्थानं निरीक्षयेत् विचारयेदिति ।

**हिन्दी**—नदी के पार होने में, मार्ग की विषमता में, दुर्ग भंग या जय में, शत्रु संकट उपस्थित होने पर, द्रव्यादि के नष्ट (चोरी या झपहृत) होने पर, विषकीट से दंशित होने पर, युद्ध (कलह) में, रोग में तथा विपत्ति में अष्टम स्थान का विचार करना चाहिए ।

मृत्यु, वित्त नाश, युद्ध, शत्रु तथा मनोव्यथा का भी विचार अष्टम स्थान से होता है । यात्रारम्भ में अथवा यात्रा के बीच में आई विपत्ति का विचार इसी स्थान से किया जाता है । शारीरिक, मानसिक तथा आर्थिक वैषम्य का विचार अष्टम भाव से ही होता है । आधि दैविक विपत्ति की सूचना इसी भाव से प्राप्त होती है ।

अथ नवमभावनिरूपणम्—

**वापीकूपतडागादिप्रपादेवगृहाणि च।**
**दीक्षां यात्रां मठं धर्मं धर्मान्निश्चित्य कीर्तयेत् ।। ५१ ।।**

**दीप्तिः**—वापी दीर्घिका । कूपः खननक्रिया द्वारा निर्मितो जलस्त्रोतः, तडागः पुष्करिणी प्रपा पानीयशाला जलशाला वा प्याऊ इति श्लोके समानि प्रपा सह वोऽन्नभाग, इत्यथर्ववेदे । देवगृहाणि मन्दिराणि । एतानि सर्वाणि वापीकूपतडागप्रपामन्दिराणि प्रभृतीनि धर्मात् नवमभावात् निश्चित्य सुविचार्य्य कीर्तयेत् । दीक्षां मन्त्रग्रहणक्रियां, यात्रां गमनक्रियां मठं धर्माचार्याणामाश्रमं धर्मशालां वा धर्म धर्मकार्यं पुण्याचरणं वेति सर्वे विषयाः नवमभावादेव विचार्यन्ते।

**हिन्दी**—वापी (दीर्घिका) कुआँ, तालाब प्याऊ (जहाँ धर्मार्थ जल पिलाया जाता है ) देवमन्दिर, दीक्षा (मन्त्रग्रहण), यात्रा, मठ (धर्मशालादि) तथा धर्मकार्य का निश्चय धर्मस्थान (नवमभाव) से करना चाहिए ।

नवम स्थान से भाग्य, पथकुशलता, तथा धर्म के साधनों का भी विचार किया जाता है । धार्मिक ट्रस्टों, यशः प्राप्तिः, देव, गुरु तथा विप्र की कृपा का भी विचार, इसी स्थान से किया जाता है ।

अथ दशमभावनिरूपणम्—

**राज्यं मुद्रां पुरं पण्यं स्थानं पितृ-प्रयोजनम्।**

**वृष्टयादिव्योमवृत्तान्तं व्योमस्थानान्निरी क्षयेत् ।। ५२ ।।**

**दीप्तिः**—राज्यं राष्ट्रं, मुद्रां राष्ट्रस्य द्रव्यं, मुदयैव राज्यव्यापारः प्रवर्तते, पुरं नगरं, पण्यं मूल्यं पाठभेदे परं पुण्यं श्रेष्ठकृत्यमित्याशयः । स्थानं गृहं निवासस्थलं वेति । पितृप्रयोजनं पितृकर्म पाठभेदे तातं पितरं प्रयोजनमभीष्टकार्यं वृष्ट्यादिकं वर्षादिकं सर्वं व्योमवृतान्तमाकाशनिरीक्षणं व्योमस्थानाद् दशमस्थानात् निरीक्षयेत् विलोकयेदिति भावः ।

**हिन्दी**—राज्य, राज्यमुद्रा, नगर, पण्य कार्य (क्रयविक्रय), निवासस्थान पितृकर्म, वर्षा, आकाश की स्थिति आदि विषयों का निरीक्षण दशम स्थान से करना चाहिए ।

कतिपय प्रतियों में 'परं पुण्यं' पाठभेद मिलता है जिसका आशय है श्रेष्ठ, सात्विक, यशः पूर्ण तथा नैतिक कार्य का निरीक्षण भी इसी स्थान से करना चाहिए । इसी स्थान से नेतृत्व का भी विचार करना चाहिए । किन्ही-किन्ही प्रतियों में 'तातं प्रयोजनं' अलग-अलग लिखा हुआ मिलता है । इसका अभिप्राय है दशम स्थान से पिता सम्बन्धी समस्त विचार तथा प्राश्निक के जीवन और कार्यों का उद्देश्य भी इसी स्थान से जाना जाता है ।

दशम भाव के विचार से ही आकाश यात्रा, आकाशीय ज्ञान, विदेशादि गमन का ज्ञान हो पाता है ।

अथैकादशभावनिरूपणम्—

**गजाश्वयानवस्त्राणि सस्यकाञ्चनकन्यकाः।**

**विद्वान् विद्यार्थयोर्लाभं लक्षयेल्लाभलग्नतः ।। ५३ ।।**

**दीप्तिः**—गजो हस्ती, अश्वो हयः, यानं वाहनं (विशेषरूपेण यन्त्रात्मकम्) वस्त्रमम्बरं पटं वेति सस्यं धान्यंम काञ्चनं स्वर्णं, कन्यका बाला, विद्यार्थयोर्लाभं विद्या चार्थश्च विद्यार्थौ तयोः विद्यार्थयोर्लाभं प्राप्ति आगमनं वा लाभलग्नत एकादशभावाल्लक्षयेद् विचारयेत् । अत्र लग्न पदं 'भाव' शब्दस्य वाचकः ।

**हिन्दी**—हाथी, घोड़ा, वाहन, वस्त्र, धान्य, स्वर्ण, कन्या, विद्या और धन के लाभ का विचार विद्वान् गणक को एकादश स्थान से करना चाहिए ।

एकादश स्थान को आय (प्रतिदिवसीय आय) स्थान कहते हैं । एकादश स्थान में बैठने वाला कोई भी ग्रह पञ्चमस्थान को पूर्ण दृष्टि से देखता है। अत: पञ्चम और एकादश स्थान का परस्पर सम्बन्ध होने से विद्या तथा संतति का भी विचार इस भाव से किया जाता है । ताजिकनीलकण्ठीकार ने एकादशस्थान से चतुष्पदों का भी विचार करने को कहा है ।

अथ द्वादशभावनिरूपणम्—

**त्यागभोगविवादेषु दानेष्टकृषिकर्मसु।**
**व्ययस्थानेषु सर्वेषु विद्धि विद्वन् ! व्ययं व्ययात् ।। ५४ ।।**

**दीप्ति**:—त्यागो द्रव्यमानं मङ्गलामङ्गलकर्मणे: प्रदत्तं धनं यदनुपकारिणे दीयते भोग: स्वार्थे कुटुम्बार्थे च प्रयुक्तं धनं भोगवाचको भवति अथवा स्वार्थे कृतो व्ययो भोगो भवति । विवाद: कलह: 'विवाहेषु' पाठभेदो नोपयुक्तो व्ययस्थानात्तस्य विचाराभावात् । दानं त्यागमेव यत्तु पूर्वमुक्तम् । परञ्चात्र ज्यौतिषे त्यागदानयोर्मध्ये यदन्तरं विद्यते तत्त्विदं—शान्तये प्रदत्तं धनं त्यागो धर्माय च कृतं व्ययं दानमिति । इष्टकृषि: स्वाभीष्टक्षेत्रवृत्ति: । कर्षणात् कृषि: । क्षेत्राद् अन्नकर्षणम् । 'हिंसादोषप्रधानत्वात्प्रमृतं कृषिरुच्यते ।' 'प्रमृतं कर्षणं' मिति मनूक्ति: ।

एतेषु सर्वेषु दानेष्टकृषिकर्मसु तथा च व्ययस्थानेषु अन्यदपिव्ययकार्येषु व्ययं विद्वन् ! गणक !! व्ययाद् द्वादशस्थानाद् विद्धि जानीहि, इति द्वादशस्थानभावविचार: सञ्जात: ।

**हिन्दी**—त्याग, भोग, विवाद, दान, इच्छित खेती तथा सभी प्रकार के अन्य व्यय का विचार विद्वान् गणक द्वादश स्थान से करें ।

शान्ति आदि कार्य में खर्च किया हुआ धन त्याग कहलाता है । कुटुम्ब तथा स्वाभीष्ट सिद्धि हेतु खर्च किया गया धन भोग कहलाता है । परार्थ अथवा धर्म के लिये अनुपकारी व्यक्ति को दिया गया धन दान कहा जाता है ।

किसी भी प्रकार के व्यय को या धन के नाश को बारहवें भाव से विचारा जाता है । प्रचलित भुवनदीपक की प्रति में 'विवाद' के स्थान पर 'विवाह' पाठभेद मिलता है । यह असमीचीन है, क्योंकि बारहवें स्थान से विवाहादि मंगल कार्य का विचार नहीं होता है ।

इति भाव विचार द्वारम् ।

अथेष्टकालनिर्णयद्वारम् ।। ८ ।।

**भागं वारिधिवारिराशिराशिषु (१४४) प्राहुर्मृगाद्ये बुधाः**
**षट्के बाणकृपीटयोनिविधुषु (१३५) स्यात्कर्कटाद्ये पुनः ।।**
**पादैः सप्तभिरन्वितैः (७) प्रथभकं मुक्त्वा दिनाद्ये दले।**
**हित्वैकां घटिकां परे च सततं दत्वेष्टकालं वदेत् ।। ५५ ।।**

**दीप्तिः**—वारिधिवारिराशिराशिषु वारिधिः समुद्रश्चतुः समुद्रापृथिवीत्युक्त्या चत्वारः । वारिराशिश्चत्वारः शशी एकसङ्ख्यावाचकः । अङ्कानां वामतो गतिरिति १४४ अयं ध्रुवाङ्कः । कस्मिन् काल इत्याङ्काक्षायां मृगादिषट्के यदा मकरराशौ सूर्यः समायाति ततः समारभ्य षड्राशिभोगं यावत्। तथा कर्कटाद्ये षट्के च पुनः यदि सूर्यः समायाति तदा बाणः पञ्चसायका भवन्ति, अतः पञ्चसङ्ख्याज्ञेया कृपीटयोनिरग्निः त्रय अङ्काः । 'कृपीटमुदरे जले' इति रत्नकोषः । कृपीटयोनिरस्येति वा कृपीटयोनिः विधुश्चन्द्र एकसङ्ख्यावाचकः । अनेन प्रकारेण १३५ पञ्चत्रिंशदधिकं शतं ध्रुवाङ्को भवति कर्कटे स्थिते सवितरि। स्पष्टार्थो मकरसंक्रान्तिदिनं समारभ्य मिथुनान्तदिनं यावत् १४४ ध्रुवाङ्कः । कर्कसंक्रान्तिदिनं समारभ्य धनुरंत्यदिनं यावत् १३५ ध्रुवाङ्कः । एतद् भागं बुधा गणकाः प्राहुः । स्वकीयां शरीरच्छायां पादैः प्रमाप्य तस्यां सप्तसङ्ख्या योजनीया परन्तु मापितपादानां मध्ये एकं पादं न्यूनं क्रियते । प्रथमदले प्रथमं मध्याह्नं यावद् एकां घटीमृणं कृत्वा तथा द्वितीयेऽपराह्ने दले चैकां घटी संयोज्य इष्टकालमानयेत्।

प्राचीनायां टीकायामन्यप्रकारोऽप्युपलभ्यते

छायापादै रसोपेतैरेकविंशशतं भजेत् ।
लब्धाङ्के घटिका ज्ञेया एवं शेषे फलानि च ।।

अत्राशय: शरीरच्छाया + ६ भाज्यसंज्ञकम् । भाजक सङ्ख्या १२१ । अत्रोपलब्धिरिष्ट घटिका ज्ञेया ।

अन्य प्रकार:–

छायापादै इति मुनि ७ संयुज्यान्नन्दाष्टबाहुध्रुवराशिलब्धे । नयनविह्वलं द्वाभ्यां हीनं दलीकरणं तस्माच्छेषमर्धं दलीक्रियते दिवसो गम्यते ।

**हिन्दी**–अभीष्ट समय में अपने शरीर की छाया को अपने पैरों से माप कर उसमें सात संख्या जोड़े तथा एक घटा दें । इसकी भाजक संज्ञा होती है । मकर के सूर्य में १४४ में तथा कर्क के सूर्य में १३५ में पूर्वोक्त भाजक से भाग देने पर प्राप्त लब्धि में मध्याह्न का समय होने पर एक घटाने से अपराह्न का समय हो तो एक जोड़ने से इष्टघटी (इष्टकाल) होता है ।

भुवनदीपक १२३७ ई० की रचना है । उस समय घटिका यन्त्र का अभाव होने के कारण छाया के द्वारा इष्टघटी साधन का प्रचार था ।

यह निश्चित तथ्य है कि उक्त प्रक्रिया द्वारा इष्टघटी लाने पर काफी स्थूल होगी । जहाँ सूर्योदय का मानक समय जानने का कोई साधन नहीं था, वहाँ छाया द्वारा इष्टघटी लाने की बात एक उपलब्धि थी । साम्प्रतिक युग में प्रचलित लग्नसाधन विधि 'तत्कालार्कै: सायन: स्वोदयघ्ना' से ही इष्टघटी बनानी चाहिए।

इतीष्टकालनिर्णयद्वारम् ।

अथ लग्नविचारद्वारम् ।। ९ ।।

**इन्दु: सर्वत्र बीजाभो लग्नं कुसुमप्रभम्।**

**फलेन सदृशोंऽशश्च भाव: स्वादुसम: स्मृत: ।। ५६ ।।**

**दीप्ति:**–श्लोकेऽस्मिन् फलादेशस्य चत्वारि प्रमुखाङ्गानि निर्देशितानि सन्ति । तानि च इमानि– १ चन्द्र: २ लग्नम् ३ नवमांश: ४ भाव इति तत्र विधु: चन्द्रो सर्वत्र बीजाभो बीजतुल्यो भवति । अत्र चन्द्रबलस्य अर्थवाद: कीर्तित: । सति चन्द्रबले बीजबलमित्यर्थ: । वस्तुतस्तु चन्द्र: सर्वकार्येषु अतीतानागतवर्तमानरूपेषु बीजरूपो भवति । चन्द्रस्य विचारं विना न किञ्चित् सम्पादनीयमिति भाव: । अत्र रूपकमुखेन कार्यलताया: बीजं चन्द्र:, लताप्रतानस्य कुसुमं लग्नं फलं नवमांश: स्वादो भावो (द्वादशभावा:) दर्शित: ।

यादृशं लग्नं स्वामियुतं दृष्टं वा तादृशं कार्यं फलस्य पुष्पमित्यर्थ:। यादृशो लग्ननवमांशस्तादृशं तत्तुल्यं फलं कीर्तनीयम् । लग्नस्य यादृशो भाव: क्रूराक्रूरचरस्थिरस्तोदितादि: तादृश एव फलस्य स्वादो भवति ।

लग्नबलनिर्धारणे विंशोपका अपि ज्ञेया: यावतां ग्रहाणां लग्ने स्थितिर्भवति यावन्तो वा ग्रहा: लग्नं पश्यन्ति तावन्तो विंशोपका: लग्नबलकारका भवन्ति । लग्नस्थग्रहै:, लग्नं यैर्ग्रहैर्दष्टं, तेभ्य: विंशोपकबलनिर्धारणाय श्लोक:

रवौ सार्द्धत्रयो भागा: पञ्च चन्द्रे गुरौत्रयम् ।

द्वौ शुक्रौ द्वौ बुधे चैव लग्नविंशोपका: स्मृता: । इति

यदि ग्रहो लग्नस्थितो लग्नं पश्यति वा तदा सूर्यादि ग्रहवशेन विंशोपकबलम् सूर्य: ३।।, चन्द्र: ५, गुरु: २, शुक्र: २, बुध: २ । उच्चस्थेन ग्रहेण लग्नं सबलं नीचस्थेन निर्बलं ज्ञेयम् । एवमेव–

मन्दे भौमे तथा राहौ प्रत्येकं सार्द्धमिष्यते ।

दुर्बलं बलवल्लग्नं विज्ञेयं ज्ञानवेदिभि: ।।

असावपि श्लोक । अत्र क्रमश: शनौ, कुजे राहौ च सार्द्धमेंक बलं ज्ञेयम् ।

**हिन्दी**–इस श्लोक में रूपक द्वारा प्राश्निक की कार्यलता के प्रमुख अंगो का वर्णन किया गया है । फलादेश के चार प्रमुख अंग होते हैं– १. चन्द्रमा २. लग्न ३. नवमांश तथा ४. भाव । इनमें से कार्यलता हेतु चन्द्रमा सर्वत्र बीज रूप, लग्न उसमें पुष्परूप, नवमांश फलरूप तथा द्वादशभाव उस पक्वफल के स्वाद (रस) रूप में माना गया है ।

चन्द्रमा प्रत्येक फलादेश में बीजरूप होता है । चन्द्रबल ही बीज (प्रधान) बल होता है । वस्तुत: यहाँ चन्द्रबल हेतु अर्थवाद का सहारा लिया गया है । वैसे भी चन्द्रमा प्रभावी ग्रह होने के कारण अतीत वर्तमान और अनागत काल का द्योतक होता है ।

लग्न बल से कार्यलता के पुष्पित और फलित होने की सूचना मिलती है । लग्न यदि स्वामी से युत वा दृष्ट हो अथवा शुभ ग्रह से युत या दृष्ट हो तो कार्य का फल मिलेगा ही । पुष्प फलागमन के पूर्व विद्यमान होता है । पुष्प से

फल की सूचना मिलती है । क्रूरादि खगों (ग्रहों ) से आक्रान्त लग्न (पुष्प) फल की विनष्टता का सूचक होता है । लग्न बल के निर्धारण हेतु ग्रहों का विंशोपक बल का निर्धारण आवश्यक होता है । लग्न यदि किसी ग्रह से युत या दृष्ट है तो वह ग्रह उसे बल देता है, जैसे–

| | |
|---|---|
| सूर्य | ३ ।। बल |
| चन्द्र | ५ बल |
| भौम | १ ।। बल |
| बुध | २ बल |
| गुरु | ३ बल |
| शुक्र | २ बल |
| शनि | १ ।। बल |
| राहु | १ ।। बल |
| ग्रहविंशोपक योग = | २० बल |

यदि नीच राशि का ग्रह लग्नस्थ हो या लग्न को देखता हो तो उतने लग्न बल की हानि होती है ।

इस प्रकार चन्द्र बल से कार्य का आधार मजबूत होता है । लग्न बल से कार्य का पुष्प और सुगन्ध भव्य होता है । नवमांश बल से कार्य फलीभूत हो जाता है तथा भावबल से उसका रस परिपाक जाना जाता है , अर्थात् भाव और भावेश से फलोपभोग का कथन करना चाहिए ।

इस सन्दर्भ में मेरा एक श्लोक द्रष्टव्य है–

योगाः फलानि कथिताः कुसुमानि भावाः
लग्नं प्ररोह इव पत्र समस्तदीशः ।
राशेः पतिस्तरुणकाण्डमयः प्रदीप्त–
श्चन्द्रः सदा फलित पादपबीजरुपः ।।

अर्थात् फलितशास्त्रवृक्ष का बीज चन्द्रमा, बली राशीश मजबूत स्कन्ध, लग्न शाखायें, लग्नेश पल्लव, भाव फूल तथा ग्रह योग फल रूप होता है ।

अथ लग्नस्य भूतभाविवर्तमानस्वरूपनिरुपणम्—

**उदितं चिन्तयेद् भावं भाविभूतं च चिन्तयेत्।**

**कार्यभावेन योगं च कार्यभावस्थितं ग्रहम् ।। ५७ ।।**

**दीप्ति**:—उदितं क्षितिजे प्रकटितं लग्न भावं लग्नंभावं चिन्तयेद् विचारयेत् । पुनः भाविभूतञ्च ऐष्ययातञ्च चिन्तयेद् विलोकयेद् । कार्यभावेन कार्यस्थाने स्थितेन भावेन प्रश्नकाले स्थितं ग्रहं चिन्तयेत् । स्पष्टोऽयमर्थो यत् कार्य येन भावेन विचारणीयं तस्य भावस्य ग्रहस्थितिर्ज्ञेया । एवमेव कार्यभावस्थितं ग्रहं विचारयेत् । अर्थात् तस्मिन् भावे स्थितानां ग्रहाणामपि विचारः कर्त्तव्यः । पूर्वमेव सप्तमे द्वारे भावानां विचारः सञ्जातः तदनुसारमेव कार्यप्राधान्यमवलोक्य तस्य भावस्य विचारः, ग्रहयोगविचारः, भावस्थितग्रहविचारश्च कर्त्तव्यः ।

स्पष्टलग्नं यस्मिन्नंशे भवति स वर्तमानांशः । यातं भूतं व्यञ्जयति, अर्थात् येंऽशाः गतास्तेऽतीतकालस्य ख्यापकाः । यो भागोंऽशो वा ऐष्यः स भावी भवति । फलितोऽर्थो यल्लग्नस्य वर्तमानातीतानागतभावान् विचार्य कार्यस्यापि भूतभावीवर्तमानत्वं चिन्तनीयम् ।

अत्र विशेषः—प्रत्येक लग्नस्य त्रिभागं विधाय क्रमेण भूतं भविष्यद्वर्तमानञ्च ज्ञायते । मीनमेषे त्रिघटिकाः, वृषकुम्भौ चतस्रो घटिका मिथुनमकरौ पञ्चघटिकाः, कर्कसिंहकन्यातुलावृश्चिकधनुषां षड् घटिका भोग्या भवन्ति । कार्यभावस्थितानां ग्रहाणां विषये एकः श्लोको लभ्यते—

राहुभौमान्तरे चन्द्रः स्यात्तदा चन्द्र कर्तरी ।
शनिराह्वन्तरे सूर्यो हायने सूर्यकर्तरी ।।
सौम्याऽसौम्याश्च मिश्रा वा पृच्छायां यत्तमे गृहे ।
तावत्यब्दफलं तादृक् वाच्यं जन्मगृहैरपि ।।

**हिन्दी**—क्षितिज में जो लग्न उदित हो उसी भाव का विचार करना चाहिए । पुनः उस लग्न से भूत और भविष्य की चिन्ता करनी चाहिए । कार्यभाव से योग का तथा कार्यभाव में स्थित ग्रह का विचार करना चाहिए ।

स्पष्ट लग्न जितने अंश का होता है उससे पूर्व का अंश भूतकाल का ज्ञापक होता है । भोग्य अंश भविष्य काल का तथा विद्यमान अंश वर्तमान काल का बोधक होता है । आशय यह है कि लग्न के द्वारा भूत, भविष्य और वर्तमान का विचार करना चाहिए । कतिपय आचार्यों ने लग्न को तीन भागों में विभक्त कर १०-१० अंशों का क्रमश: भूत, वर्तमान तथा भविष्य काल माना है । मतान्तर से कुछ प्राचीनाचार्यों ने मीन और मेष की तीन घटी, वृष और कुम्भ की चार घटी, मिथुन और मकर की पाँच घटी तथा कर्कसिंहकन्या, तुला, वृश्चिक और धनुराशियों की छ: घटी को भोग्यघटी के रूप में माना है ।

यहाँ 'कार्यभाव' पद का अर्थ है– अभीष्टकार्य (प्रश्न) का भाव । द्वादश भावों से पृथक्-पृथक् क्या विचारना चाहिए यह भावविचारद्वार में बतलाया जा चुका है । अत: किसी कार्य का विचार करते समय उसके भाव से ग्रह योग का विचार करना चाहिए । साथ ही साथ उस भाव में स्थित ग्रहों की प्रकृति आदि का भी विचार करना चाहिए । फलत: लग्न और कार्यभाव को दृष्टि में रख कर ही फल कहना समीचीन होता है ।

अथ लग्नेशस्य विचारावश्यकतामाह—

**उदितस्यादौ भावस्याधिपति चिन्तयेत्प्रयत्नेन ।**

**तदनु च नाथो यस्मिन्नासीद् भावे विचार्यं तत् ।। ५८ ।।**

**दीप्ति**:–आदौ प्रथमे प्रयत्नेन सावधानेन चेतसा आयासेन वेति भाव: । उदितस्य प्रकटितस्य लग्नस्य भावस्याधिपति लग्नेशं चिन्तयेद् विचारयेत् तदनु तत्पश्चात् तदनन्तरं वा नाथो लग्नेशो यस्मिन् भावे तन्वादिद्वादशस्थाने आसीत् तत् विचार्यं चिन्तनीयम् । अत्र व्यापकमर्थमपि चिन्तनीयं यल्लग्नेश: कस्यामवस्थायां स्थितो विद्यते । तत्र इमे विषया अवश्यमेव चिन्त्या:—

स्वामित्रनीचगोवक्र: स्वराशिस्थोऽरिवर्गग: ।
लग्नाद् द्वादशग: षष्ठ: क्रूरयुक्तोऽथ वीक्षित: ।।
याम्यो राहोस्तु पुच्छस्य बालो वृद्धोऽस्तगो जित: ।
मुथशीलो मुशरीफे च पापैरित्यबलो ग्रह: ।।

एते दोषास्सन्ति । एभिर्दोषैरहितो लग्नेशः शुभदो भवति । ग्रहाणां दीप्तदीनमुदित स्वस्थसुप्तनिपीडितमुषितपरिहीनसुवीर्याधिकवीर्यभेदा भवन्ति । तत्र नामसदृशं फलमपि चिन्त्यम् ।

स्वोच्चे दीप्तः समाख्यातो नीचे दीनः प्रकीर्तितः ।
मुदितो मित्रगेहस्थः स्वस्थश्च स्वगृहै स्थितः ।।
शत्रुगेहस्थितः सुप्तो जितोन्येन निपीडितः ।
नीचाभिमुखगो हीने मुषितोऽस्तङ्गतो ग्रहः ।।
सुवीर्यः कथितः प्राज्ञैः स्वोच्चाभिमुखसंस्थितः ।
अधिवीर्यो निगदितः सुरश्मिः शुभवर्गजः ।।

ग्रहाणां पञ्चबलानि जातके ख्यातानि सन्ति–स्थानदिक्काल चेष्टानैसर्गिकप्रभृतीनि ।

**हिन्दी**–सर्वप्रथम यत्नपूर्वक लग्नेश का विचार करना चाहिए तत्पश्चात् लग्नेश किस भाव में स्थित है ? उसका विचार करना चाहिए ।

लग्नेश का विचार करते समय अस्त, उदय, उच्च, नीच, क्रूराक्रान्त, क्रूरदृष्ट, शुभ युक्त और शुभ दृष्ट तथा उसके पाँच प्रकार के बलों को अवश्य देखना चाहिए । ग्रहों के पाँच बल क्रमशः स्थान, दिक्, काल, चेष्टा तथा नैसर्गिक कहे गये हैं । स्वगृह, मूलत्रिकोण तथा मित्रगृह में स्थित लग्नेश उत्तम होता है । लग्नेश यदि सूर्य के सान्निध्य में आ गया हो तो वह हतरश्मि हो जाता है ।

लग्नेश त्रिक् (६, ८ तथा १२) भाव स्थित होकर अशुभ फल देता है। अतः इसका भी विचार करना चाहिए । इन विषयों का विस्तार पूर्वक अध्ययन जातकशास्त्र से करना चाहिए ।

अथ भावभावेशलग्नेशानां विचारः—

**भावोऽथ कार्यरूपो यस्तदधिपलग्नाधिपौ चिन्त्यौ।**
**वीक्षणयोगौ भावाधिष्ठातारौ पुनश्चिन्त्यौ ।। ५९ ।।**

**दीप्तिः**–अथ कार्यरूपो भावः कार्यविशेषस्य यो भावो निश्चितो विद्यते तस्य भावस्य चिन्तनम् । एवमेव तदधिपो भावाधिपो भावेश इत्यर्थः । लग्नाधिपो

लग्नेश: । उभयोर्भावेशलग्नेशयो: चिन्तनं कार्यम् अर्थात् भावेशलग्नेशौ चिन्त्यौ विचारणीयौ भवत: । विक्षणयोगौ दृष्टियोगावुभयोर्भावेशयोर्योगौ चिन्त्यौ भवत: । भावाधिष्ठातारौ उदितभावकार्यभावयो अधीश्वरौ चिन्तनीयौ ।

**हिन्दी**—कार्य से सम्बन्धित भाव के स्वामी और लग्नभाव के स्वामी दोनों का विचार करना चाहिए । पुन: लग्नेश तथा भावेश के दृष्टियोग को विचारना चाहिए । द्वादशभावों से विचारणीय विषयों को बतलाया जा चुका है । प्राश्निक के प्रश्न को ध्यान में रख कर लग्नेश तथा भावेश का विचार करना चाहिए ।

अथ कार्यसिद्धियोगा:—

**लग्नपतिर्यदि लग्नं कार्याधिपतिश्च वीक्षते कार्यम्।**
**लग्नाधीश: कार्यं कार्येश: पश्यति विलग्नम् ।। ६० ।।**
**लग्नेश: कार्येशं विलोकते विलग्नपं तु कार्येश:।**
**शीतगुदृष्टौ सत्यां परिपूर्णा कार्यनिष्पत्ति: ।। ६१ ।।**

**दीप्ति:**—अत्र कार्यसिद्धियोगा: प्रतिपादिता: सन्ति । तत्र कार्यसिद्धिकारणभूताऽवस्था वर्ण्यते—

(१) यदि लग्नपतिर्लग्नशो लग्नं तनुभावं पश्यति ।
(२) कार्याधिपतिश्च कार्येश: कार्यं वीक्षते ।
(३) लग्नाधीशो लग्नेश: कार्यं पश्यति ।
(४) कार्येश: विलग्नं प्रश्नलग्नं पश्यति ।

एतास्ववस्थासु स्थितासु कार्यसिद्धिर्भवति ।

अपि चेत्

(५) लग्नेश: कार्येशं विलोकयेद् अर्थात् प्रश्नलग्नेशो यदि कार्यपं पश्यति ।
(६) कार्येशो यदि लग्नपं विलोकयेत् तदा कार्यसिद्धिर्भवति ।

यदि शीतगुदृष्टौ चन्द्रमसा तौ लग्नेशकार्येशौ दृष्टौ भवतस्तदा कार्यसंसिद्धि: परिपूर्णा स्यात् ।

कार्येशाः पृथक् पृथक् भवन्ति । यस्य यत्कार्यं भवति तस्य कार्यस्य प्राधान्यमभिलक्ष्य कार्येशं कार्यं वा ज्ञायते ।

**हिन्दी**—यदि लग्नेश लग्न को और कार्येश कार्यभाव को देखता हो अथवा लग्नेश कार्यभाव को और कार्येश लग्नभाव को देखता हो अथवा लग्नेश कार्येश को देखता हो और कार्येश लग्नेश को साथ ही इन पर चन्द्रमा की दृष्टि पड़ रही हो तो कार्य की पूर्णतया सिद्धि होती है ।

प्रष्टा द्वारा पूछे गये प्रश्नों पर विचार करना चाहिए । कि वे किस भाव से सम्बन्धित हैं । प्रश्न जिस भाव से सम्बन्धित होता है वह कार्यभाव कहलाता है । उस भाव का स्वामी कार्येश कहलाता है । इस प्रकार कार्य और कार्येश प्रश्न भेद से बारह हो सकते हैं ।

शरीर या स्वास्थ्य से सम्बन्धित प्रश्न होने पर कार्यभाव लग्न, और धन लाभ प्रश्न में कार्यभाव द्वितीयभाव होगा । सहजभाव प्रश्न में कार्येश तृतीयभावेश होगा । गृहसुखादि लाभ प्रश्न में चतुर्थेश कार्येश होगा । विद्यापुत्राप्तिप्रश्न में पञ्चमेश कार्येश होगा । स्त्रीलाभ प्रश्न में कार्येश सप्तमेश होगा । राज्य और जीविका सम्बन्धी प्रश्न में दशमेश कार्येश होगा ।

इस प्रकार कार्यभाव और कार्येश का निर्धारण प्रश्न के आधार पर करना चाहिए । भाव विचार अध्याय में भावों से चिन्त्य विषयों का वर्णन किया जा चुका है । उसी आधार पर कार्य कार्येश का निर्धारण करना चाहिए ।

**दशमतृतीये नवपञ्चमे चतुर्थाष्टमे कलत्रं च।**
**पश्यन्ति पादवृद्ध्या फलानि चैवं प्रयच्छन्ति ।।**
**पूर्णं पश्यति रविजस्तृतीयदशमे त्रिकोणमपि जीवः।**
**चतुरस्त्रं भूमिसुतः सितार्कबुधहिमकराः कलत्रं च ।। ६२ ।।**

**दीप्तिः**—ग्रहाः स्वस्थानात् पादवृद्ध्या चरणवृद्ध्या (१, २, ३, ४ चरणैः) क्रमशः दशमतृतीये कर्मसहजभावौ एकचरणेन, नवपञ्चमे धर्मसुतभावौ द्वाभ्यां चरणाभ्यां चतुर्थाष्टमे सुखरन्ध्रे त्रिभिश्चरणैः, कलत्रञ्च सप्तमभावञ्च चतुर्भिश्चरणै अर्थात् पूर्णदृष्ट्या पश्यन्ति फलानि चैवं प्रयच्छन्ति ।

रविजो मन्दः, तृतीयदशमे सहजदशमभावौ, अपि जीवो बृहस्पतिः त्रिकोणं नवपञ्चमे, भूमिसुतो भौमश्चतुरस्त्रं सुखाष्टमे पूर्णं पश्यति पूर्णदृष्ट्या विलोकयति । सितार्कबुधहिमकराः शुक्रसूर्यज्ञचन्द्राः कलत्रञ्च सप्तमं भावं पूर्णं पश्यन्ति ।

**हिन्दी**—सभी ग्रह तृतीय और दशम स्थान को एक पाद दृष्टि से तथा नवम और पञ्चम स्थान को द्विपाद्दृष्टि से एवमेव चतुर्थ तथा अष्टम स्थान को त्रिपाद्दृष्टि से तथा सप्तम स्थान को पूर्ण दृष्टि से देखते हैं ।

शनि तृतीय तथा दशम स्थान को, बृहस्पति नवम तथा पञ्चम स्थान को और मंगल चतुर्थ तथा अष्टम स्थान को पूर्ण दृष्टि से देखता है । शेष सभी ग्रह सप्तम स्थान को पूर्ण दृष्टि से देखते हैं ।

ग्रहों की दृष्टि के सम्बन्ध में पाराशर का मत सर्वमान्य है—

पश्यन्ति सप्तमं सर्वे शनिजीवकुजापुनः ।
विशेषतश्चत्रिदशत्रिकोणचतुरष्टमान् ।। ल० पा० ५

एकपाद, द्विपाद तथा त्रिपाद दृष्टि के सम्बन्ध में स्मरणीय श्लोक मिलता है—

त्र्यांश शनिर्देवगुरुस्त्रिकोणं तुर्याष्टमं भूमिसुतः प्रपूर्णम् ।
ज्ञार्केन्दुशुक्राः क्रमपादवृद्ध्या पश्यन्ति चास्तं सकलाः प्रपूर्णम् ।।

अथ लग्नपत्यादिदृष्टिविशेषमाह—

**कथयन्ति पादयोगं पश्यति सौम्यौ न लग्नपो लग्नम् ।**
**लग्नाधिपश्च पश्यति शुभग्रहो नार्धयोगं च ।। ६३ ।।**

**दीप्तिः**—यदि सौम्यः शुभ ग्रहो लग्नं पश्यति, लग्नपो लग्नेशो लग्नं न पश्यति तदा (बुधाः) पादयोगं चतुर्थांशयोगं १/४ वा [विंशोपकानां पादयोगं ५] कथयन्ति । एवमेव लग्नाधिपो लग्नेशो लग्नं पश्यति शुभग्रहो न पश्यति तदा अर्धयोगं १/२ कथयन्ति । विंशोपकानामर्धांशाः १० कार्यसिद्धिदाः ।

**हिन्दी**—यदि शुभ ग्रह लग्न को देखता हो और लग्नेश लग्न को न देख रहा हो तो पादयोग [१/४] होता है । लग्नेश को देख रहा हो और शुभ ग्रह न देखता हो तो अर्धयोग [१/२] होता है ।

५ विंशोपक पहली स्थिति में मिलते हैं । दूसरी स्थिति में १० । इन दोनों स्थितियों में कार्यसिद्धि कही गई है ।

**एकः शुभग्रहो यदि पश्यति लग्नाधिपो विलोकयति।**
**पादोनयोगमाहुस्तदा बुधाः कार्यसिद्ध्यै ।। ६४ ।।**

**दीप्तिः**—यदि लग्नमेकः शुभग्रहः सौम्यग्रहः पश्यति लग्नाधिपो लग्नेशोऽपि [लग्नं] विलोकयति तदा बुधाः कार्यसिद्ध्यै पादोनयौगम् [३/४, वा (२०×३)/४ = १५ विंशोपकः भवन्ति ] आहुः । अस्यामवस्थायां कार्यसिद्धिर्भवत्येव ।

**हिन्दी**—यदि लग्न को एक शुभ ग्रह देखता हो तथा उसे लग्नेश भी देख रहा हो तो पादोनयोग कहा जाता है । यह योग प्रश्नकार्य की सिद्धि का सूचक होता है ।

पादोनयोग में १५ विंशोपकों की प्राप्ति होती है । यह लग्नेश तथा शुभग्रह की तीसरी स्थिति होती है ।

अपि च

**लग्नपतिदर्शने सति शुभग्रहौ द्वौ त्रयोऽथवा लग्नम्**
**पश्यन्ति यदि तदानीमाहुर्योगं त्रिभागोनम् ।। ६५ ।।**

**दीप्तिः**—अथ लग्नपतिदर्शने सति यदि अन्यौ द्वौ त्रयो वा शुभग्रहा लग्नं पश्यन्ति तदानीं तस्मिन्काले त्रिभागोनयोगमाहुः । अत्र प्राचीनाचार्याः त्र्यंशा न्यूना मन्यन्ते अर्थाद् त्रिभिर्भागैर्न्यूनं योगं २०–३ = १७ विंशोपकाः । अथवा समग्रभागस्य ३/२० भागं न्यूनं क्रियते तदा १–३/२० = २०–३/२० = १७/२० भागाः ।

**हिन्दी**—यदि लग्नेश से दृष्ट लग्न अन्य दो या तीन शुभग्रहों से दृष्ट हो तो त्रिभागोन योग कहलाता है । समग्र विंशोपक बल का ३/२० वां हिस्सा कम करने पर १–३/२० = १७/२० अर्थात् १७ विंशोपक प्राप्त होगा । ऐसी अवस्था में कार्यसिद्धि सुनिश्चित माननी चाहिए । प्राचीनटीकाकारों ने २०

विंशोपकों में से सीधे ३ अंश निकालकर विंशोपक बल माना है । इसका आशय है कार्यसिद्धि की संभावना १७/२० भाग है ।

अपि च

**क्रूरावेक्षणवर्जाश्चत्वार: सौम्यखेचरा लग्नम्**

**लग्नेशदर्शने सति पश्यन्ति पूर्णयोगकरा: ।। ६६ ।।**

**दीप्ति:**—क्रूराणां पापानां ग्रहाणामवेक्षणं विलोकनं तेन वर्जा: रहिताश्चत्वार: सौम्यखेचरा शुभग्रहा: लग्नेशदर्शने सति लग्नं पश्यन्ति तदा पूर्णयोगकरा: भवन्ति । अत्र ग्रहाणां विंशतिविंशोपका लभ्यन्ते । तैर्विशोपकै: कार्यस्य पूर्णफलप्राप्तिर्भवत्येव ।

**हिन्दी**—यदि लग्नेश से दृष्ट लग्न क्रूर ग्रहों की दृष्टि से रहित हो तथा चार ग्रहों से दृष्ट हो तो पूर्णयोग कारक होता है । ऐसी अवस्था में विंशोपक बल पूर्ण रूप से मिलता है ।

यहाँ चार श्लोकों में लगातार कार्यसिद्धि की आनुपातिक परिस्थितियों का आकलन किया गया है ।

प्रश्नकुण्डली के आधार पर क्रमश: ५, १०, १५, १७ तथा २० विंशोपकों की प्राप्ति के अनुरूप ही फलप्राप्ति की भविष्यवाणी करनी चाहिए ।

यदि "पाद योग" हो तो कार्यसिद्धि की २५ प्रतिशत आशा करनी चाहिए । इसी प्रकार 'अर्धयोग' में ५० प्रतिशत, 'पादोन योग' में ७५ प्रतिशत तथा 'त्रिभागोन योग' में ८५ प्रतिशत कार्यसिद्धि की संभावना होती है । योग होने पर कार्य सिद्धि अवश्यमेव होती है ।

इति लग्नविचारद्वारम्

अथ विनष्टग्रहविचारद्वारम् ।। १० ।।

**क्रूराक्रान्त: क्रूरयुत: क्रूरदृष्टस्तु यो ग्रह: ।**

**विरश्मितां प्रपन्नश्च स विनष्टो बुधै: स्मृत: ।। ६७ ।।**

**दीप्ति:**—क्रूरेण ग्रहेणाक्रान्त: क्रूराक्रान्त: अत्राक्रान्त शब्द: पीडावाचक: । क्रूरयुत: क्रूरेण युक्त: सहित: क्रूरदृष्ट: क्रूरेण दृष्टस्तु यो ग्रह:, अत्र

पूर्णदृष्टि एव फलदा भवति । विरश्मितां प्रपन्नो रश्मिहीनतां प्राप्तः, अस्तङ्गत इत्यभिप्रायः । एवंभूतो ग्रहो बुधैर्गणकैर्विनष्टः स्मृतः कथित इति ।

**हिन्दी**–जो ग्रह क्रूर ग्रह से पीड़ित, क्रूर ग्रह से युक्त, क्रूर ग्रह से दृष्ट और रश्मि हीन होता है उसे विद्वान् गणक विनष्ट ग्रह कहते हैं ।

**क्रूरेण जीयमानो यो राहुपार्श्वे यथा रविः ।**
**क्रूराक्रान्तः स विज्ञेयः क्रूरयुक्तः समेंशऽके ।। ६८ ।।**

**दीप्तिः**–क्रूरेण ग्रहेण यो ग्रहो जीयमानो भवति स क्रूराक्रान्तो विज्ञेयो विजानीयः । अस्यार्थः कश्चित्सौम्यग्रहः क्रूरेण ग्रहेण यदा पराजीयमानो भवति तदा स क्रूराक्रान्तो विज्ञेयः । अत्र दृष्टान्तमपि ग्रन्थकृता प्रस्तूयते–यथा राहुस्तमोग्रहस्तस्यपार्श्वे यदा रविः समागच्छति तदा स तेन (राहुणा) जीयते । यस्मिन्नंशे ग्रहो भवति तस्मिन्नवांशे राशिभागे यदि क्रूरो भवति तदा क्रूरयुक्त उच्यते एकांशे स्थितत्वात् केचनाचार्या इत्याहः । अपरे च क्रूरग्रहो यदि अन्येन युक्तः समानांशे स्थितः स्यात् तदा 'क्रूरयुत' इति ज्ञेयः ।

**हिन्दी**–क्रूर ग्रह से पराजित ग्रह क्रूराकान्त कहलाता है–जैसे राहु के समीपस्थ सूर्य । कोई (सौम्य) ग्रह समान नवमांश में क्रूर ग्रह से युक्त होता है तो वह क्रूरयुक्त कहलाता है ।

दो ग्रहों की किरणें जब परस्पर मिलती हैं तो 'अंशुविमर्द' नाम का युद्ध कहलाता है । एक ग्रह जब दूसरे से अत्यासन्न आता है तो भी उनमें शरान्तर तुल्य दूरी होती है । दो ग्रहों के बीच शरान्तरतुल्य दूरी में एक अंश का अन्तर हो और एक ग्रह लघुबिम्बीय हो तो 'अपसव्य युद्ध' कहलाता है । यदि यही दूरी एक अंश अधिक हो और दोनों ग्रह महद् बिम्बीय हों तो 'समागम' कहलाता है। इस सन्दर्भ में सूर्यसिद्धान्त दर्शनीय है—

उल्लेखं तारकास्स्पर्शाद् भेदे भेदः प्रकीर्त्यते ।
युद्धमंशुविमर्दाख्यमंशुयोगे परस्परम् ।।
अंशादूनेऽपसव्याख्यं युद्धमेकोऽत्र चेदणुः ।
समागमोंऽशादधिके भवतश्चेद्बलान्वितौ ।।

अपसव्य युद्ध में जो ग्रह लघुबिम्बीय होता है वह मदद् बिम्बीय ग्रह की किरणों से आच्छादित हो जाता है तथा उसकी किरणें विफल प्रभाव हो जाती है । अतः लघुबिम्बीय ग्रह महद् बिम्बीय ग्रह से पराजित होता है ।

वराहमिहिर के अनुसार उत्तर दिशा में स्थित स्पष्ट किरणों वाला ग्रह जयी तथा दक्षिणदिशास्थित विवर्ण, रुक्ष रश्मिहीन ग्रह पराजित होता है–

दक्षिणदिक्स्थः परुषो वेपथुरप्राप्य सन्निवृतोऽणुः ।
अधिरुढो विकृतो निष्प्रभो विवर्णश्च यः स जीतः ।। इति

**पूर्णया दृश्यते दृष्ट्या क्रूरदृष्टः स उच्यते।**
**प्रविविक्षुः प्रविष्टो वा सूर्यराशौ विरश्मिकः ।। ६९ ।।**

**दीप्तिः**–क्रूरग्रहेण यो ग्रहो दृश्यते स क्रूरदृष्टो भवति । नैकपादद्विपाद्त्रिपादादिर्दृष्टिरत्र कलनीया । सम्पूर्णया दृष्ट्या यो ग्रहो क्रूरेण दृश्यते स एव क्रूरदृष्ट इत्युच्यते । सूर्यमण्डले प्रविविक्षुः प्रवेष्टुकामो ग्रहः प्रविष्टो वा विरश्मिको जायते । सूर्यो यस्मिन् राशौ स्थितो भवति तस्मिन् अन्यो ग्रहो यदि प्रविशति तदा स विरश्मिक अस्त इति जायते । बुधशुक्रौ यदा कालांशे प्रविष्टौ भवतस्तदा एव तौ विरश्मिकौ कथ्येते । पञ्चताराग्रहाणां या स्थितिर्भवति सा शुक्रबुधयोर्न भवति । इमौ सवर्वदै सूर्यस्य सहचरिणौ (९० अंशान्तरे) भवतः ।

**हिन्दी**–क्रूर ग्रह से जो कोई अन्य सौम्य ग्रह पूर्ण दृष्ट होता है तो उसे 'क्रूरदृष्ट' कहते हैं । सूर्य राशि में अर्थात् स्पष्ट सूर्य जिस राशि में स्थित हो यदि कोई ग्रह प्रवेश करने वाला हो या प्रवेश कर चुका हो तो वह विरश्मिक (किरणों से हीन) कहलाता है ।

अथ विनष्टग्रहप्रभावमाह—

**लग्नाधिपे विनष्टे स्याद् विनष्टावयवः पुमान्।**
**विनष्टजातिवर्णश्च शुभकारा विपर्यये ।। ७० ।।**

**दीप्तिः**–प्रागुक्तप्रकारेण विनष्टग्रहाणां निर्णयं विधाय फलं चिन्त्यम् । लग्नाधिपे लग्नेशे विनष्टे सति पुमान् प्रश्नकर्त्ता विनष्टावयवो विकलाङ्गो लक्ष्मयुक्तो वा स्याद् । ग्रहाणां जात्यादिकमपि पूर्वं वर्णितम् । तेन यदि कश्चिद्

विनष्टजातिवर्णश्च ग्रहो शूद्रश्यामम्लेच्छरूपो वा जन्मकाले स्थितः तदा प्रच्छकस्यापि जात्यादिकं स्वरूपञ्च विनष्टं वाच्यमिति । अस्माद् विपर्यये प्रतिकूले अर्थाद् अविनष्टे लग्नेशे शुभाकारा अविनष्टत्वं वाच्यम् । अस्यां प्रतिकूलपरिस्थितौ प्रच्छकस्य शरीरे चिह्नानि, विकाराश्च नलक्ष्यन्ते ।

**हिन्दी**–लग्नेश के विनष्ट होने पर व्यक्ति का शारीरिक अवयव, जाति तथा वर्ण विनष्ट होता है । विपरीत स्थिति [अविनष्ट लग्नेश की स्थिति] में शुभ आकृति होती है ।

पूर्व में श्लोकों में विनष्ट ग्रह के लक्षण दिये जा चुके हैं । यदि लग्नेश विनष्ट हो तो शरीर में चिह्न, और अङ्ग हीनता होती है । साथ ही साथ व्यक्ति अशुभ वेष तथा हीन जाति वाला होता है । इस विधि से चौरादि प्रश्न में अपहर्ता की जाति और वेष का पता लग जाता है ।

**एवं धनादिस्थानेषु विनष्टेऽधिपतौ वदेत्।**
**धनभावभ्रातृभावप्रमुखान् प्रत्ययान् सुधीः ।। ७१ ।।**

**दीप्तिः**–एवं पूर्वोक्तप्रकारेण धनसहजसुखविद्यासन्तानजायाभाग्य–कर्मायादिस्थानेष्वपि यस्य भावस्याधिपतिर्विनष्टो भवति तस्य-तस्य कार्यस्य हानिर्जायते । अतो भावाधिपतीन् विलोक्य प्रत्यनेन सुधीः प्रवदेत् ।

**हिन्दी**–इस प्रकार धन, सहजादि भावों के अधिपति यदि विनष्ट हों तो धन, भाई प्रभृति विषयों का फल बुद्धिमान् गणक द्वारा विनष्ट कहना चाहिए । किसी भी भाव के विनष्ट अधिपति के द्वारा उस भाव के फल को सुनिश्चित विनष्ट कहना चाहिए । धनेश यदि विनष्ट हो तो स्थिर सम्पति तथा कुटुम्ब की क्षति होती है । इसी प्रकार समस्त भावों से विचारणीय विषयों को देख कर उसके विनष्ट अधिपति के कारण पृथक् पृथक् फल विनष्टता कही जाती है ।

इति विनष्टग्रहविचारद्वारम्

अथ राजयोगद्वारम् ।। ११ ।।

**आद्यो लग्नपतिः कार्ये लग्ने कार्याधिपो यदि।**
**द्वितीयो लग्नपो लग्ने कार्ये कार्याधिपो भवेत् ।। ७२ ।।**
**लग्नपः कार्यपश्चापि लग्ने यदि तृतीयकः।**
**चतुर्थः कार्यगौ स्यातां यदि लग्नपकार्यपौ ।। ७३ ।।**
**चतुर्षु तूभयत्रापि चन्द्रदृग्दर्शनं मिथः।**
**कार्यसिद्धिस्तदा ज्ञेया मित्रे चेदधिकं शुभम् ।। ७४ ।।**

**दीप्तिः**—कार्यसिद्धिकराणां योगानां वर्णनं ६१-६२ श्लोकयोः कृतम् । इदानीं राजयोगं निरूपयति—आद्यः प्रथमो योगस्तदा भवति यदा लग्नपतिः कार्ये लग्नेशः कार्य भावे कार्याधिपः कार्येशः लग्ने लग्नभावे च भवति । द्वितीयो राजयोगस्तदा भवेत् यदा लग्नपो लग्नेशो लग्ने भवति कार्याधिपः कार्येशः कार्ये च भवति । तृतीयराजयोगस्तदा भवेत् यदा लग्नपः कार्यपश्च लग्नेशकार्येशौ लग्ने स्थितौ भवतः । चतुर्थो राजयोगस्तदा स्यात् यदा लग्नपकार्यपौ लग्नेशकार्येशौ कार्यगौ कार्यभावस्थितौ स्यातां भवत इति भावः । इदानीं राजयोगं प्रस्तूय कार्यसिद्धियोगं निरूपयति—चतुर्षु राजयोगेषु तु मिथः परस्परमुभयत्रापि चन्द्रदृग्दर्शनं तदा कार्यसिद्धिर्ज्ञेया । अयमत्राशयः चन्द्रो लग्नेशकार्येशौ पश्यति लग्नपकार्यपौ वा चन्द्रमसं पश्यतस्तदा कार्यं सिद्ध्यति । यदि चन्द्रो मित्रगृहे स्थितो विद्यते लग्नपकार्यपौ तं पश्यतस्तदाऽधिकं शुभं विज्ञेयम् ।

राजयोगः कार्यसिद्धिकरो भवति । तत्रापि विशेषस्तदा यदा चन्द्र उभौ पश्यति, अथवा लग्नपकार्यपौ चन्द्रमसं पश्यतस्तदा नूनमेव शुभं भवति ।

**हिन्दी**—यदि लग्नेश कार्य भाव में तथा कार्येश लग्न भाव में स्थित हो तो प्रथम राजयोग होता है । लग्नेश लग्न में तथा कार्येश कार्यभाव में बैठा हो तो यह राजयोग का द्वितीय प्रकार होता है । लग्नेश और कार्येश दोनों ही लग्न में स्थित हों तो राजयोग का तृतीय प्रकार तथा कार्यभाव में लग्नेश और कार्येश बैठे हों तो चतुर्थ राजयोग होता है । इन चार राजयोगों में परस्पर चन्द्रमा की

दृष्टि हो तो कार्यसिद्धि समझनी चाहिए । यदि चन्द्रमा मित्र गृही हो तो और अधिक शुभ फल मिलता है ।

यदि किसी ने अपने कुटुम्ब से सम्बन्धित प्रश्न किया हो तो राजयोग के निम्नलिखित चार प्रकार होंगे ।—

(प्रथम राजयोग)




(द्वितीय राजयोग)



बलयुक्तं बुधा ब्रुवते कथयन्ति, अन्यथा तु तद्विकल्पे सति अबलं बलहीनं लग्नमिति कथयन्ति । अत्र 'सौम्यदृष्टं, स्वामिदृष्टं, सौम्यकेन्द्र, शुभैर्युतञ्च प्रत्येकं पदं लग्नस्य सबलत्वे स्वतन्त्रं कारणं विद्यते । अतः सर्वाणि पदानि स्वतन्त्ररूपेणात्र वर्णितानि सन्ति । केवलं सौम्येर्दृष्टं लग्नं सबलं भवति, अथवा लग्नेशद्वाराऽवलोकितं लग्नं बलयुक्तं भवति किमपि केन्द्रे सौम्यग्रहस्थितिवसादपि लग्नं बलयुतं भवति ।

**हिन्दी**–शुभ ग्रहों से दृष्ट, अपने स्वामी से दृष्ट, केन्द्र में शुभग्रहों के होने से तथा शुभग्रहों से युक्त होने पर विज्ञ गणकों ने लग्न को सबल अन्यथा (लग्न को) अबल कहा है ।

इस प्रकार से यहाँ लग्न के सबल होने के चार प्रकार वर्णित हैं–

(१) यदि लग्न शुभग्रह से दृष्ट हो ।

(२) यदि लग्न लग्नेश से दृष्ट हो ।

(३) केन्द्र (१, ४, ७, १०) में शुभग्रह स्थित हों अथवा

(४) लग्न में शुभग्रह स्थित हों ।

इन परिस्थितियों के विना लग्न अबल कहलाता है ।

इति क्रयाणकार्घद्वारम्

अथ नौमृतिबन्धनद्वारम् ।। ३० ।।

**मृत्युर्धरणकं नौश्च फलेन सदृशं त्रयम्।**
**म्रियते येन योगेन तेन योगेन मुच्यते ।। १३८ ।।**

**दीप्तिः**–षड्विंशद्वारे मृत्युयोगस्य वर्णनमाचार्येण कृतं, तद्यथा—'स्मरे व्यये धने क्रूरे लग्नमृत्यौ रिपौ शशी ।
सद्यो मृत्युकरो योगः क्रूरे वा चन्द्रपार्श्वगे ।। इति

अत्राशयो यस्मिन् योगे मृत्युर्भवति तस्मिन् योगे धरणकं मुक्तं भविष्यति तथा नावागमनप्रश्नेऽपि सकुशलमागमनं भविष्यति, परं रोगिणं कुशलप्रश्ने तु मरणमेव वाच्यम् । मृत्युधरणकनावः फलेन सदृशं सामान्यफलयुतं भवन्ति । अत्र विशिष्टां स्थिति सूचयति–येन योगेन म्रियते तनैव बद्धो मुच्यते । बद्धस्य

(धरणकस्य) मोक्षणप्रश्ने यदि प्रश्नकुण्डलयां मृत्युयोगो भवति तदाऽवश्यमेव तस्य बद्धस्य मोक्षो भवति । एवमेवाग्रे नावो रोगिणश्च स्थिति वर्णयति ।

**हिन्दी**—मृत्यु, बन्धन तथा नौका इन तीनों का फल एक समान होता है। जिस योग से मृत्यु होती है उसी योग से बद्ध व्यक्ति की मुक्ति होती है ।

छब्बीसवें द्वार में मृत्युयोग का उल्लेख किया जा चुका है । यदि योग बन्धन से मुक्ति मिलने के सन्दर्भ में किये गये प्रश्न में मिलता है तो बद्ध व्यक्ति की तत्काल रिहाई होती है ।

**क्षेमेण नौ: समायाति मृत्युयोगे समागते।**
**आमयावी स म्रियते बद्धःशीघ्रेण मुच्यते ।। १३९ ।।**

**दीप्ति**:—पूर्वोक्तं तथ्यं विस्तीणङ्करोति—मृत्युयोगे समागते सति नौर्नौका क्षेमेण कुशलेन समायाति । बद्धो: जन: शीघ्रेण जवेन मुच्यते बन्धनरहितो भवति। स आमयावी रुग्णो यस्य प्रश्नकुण्डली भवति मृत्युयोगे म्रियते देहान्तरं व्रजति योगे रोगिण: कल्याणं कथमपि न वाच्यं यतस्तस्य शरीरात् निवृत्तिर्भवति। नौमृतिबन्धनद्वारे त्रयाणां फलसाम्ये निवृत्तिरेव सामान्यतत्त्वम् । यतो नौकाऽऽगमने यात्राया निवृत्ति:, बन्धनयोगे कारागारतो निवृत्ति:, रोगिण: प्रश्ने रुजापीडितशरीरान् निवृत्ति: । अतोऽत्र निवृत्ते: साम्यं दृष्ट्वैव मृत्युप्रश्ने प्रतीपं फलं प्रतिपादितमाचार्येण ।

**हिन्दी**—प्रश्नकाल में यदि मृत्युयोग हो तो नौका सकुशल वापस आती है, रोगी मर जाता है तथा बद्ध व्यक्ति मुक्त होता है ।

सप्तम, द्वादश, द्वितीय, लग्न अष्टम तथा षष्ठ स्थान में यदि चन्द्रमा बैठा हो तो मृत्युयोग होता है अथवा चन्द्रमा के पार्श्व में क्रूरग्रह हों तो भी मृत्युयोग होता है ।

भुवनदीपक का प्रभाव परवर्ती प्रश्नग्रन्थों पर स्पष्टरूप से झलकता है । ताजिकनीलकण्ठी में भी यही बात प्रकारान्तर से कही गई है—

'बद्धोऽस्ति तत्किं भवितेति प्रश्ने
विमुच्यतेऽसौ खलु मृत्युयोगे' ।
'कुशलाऽऽयाति पृच्छायां मृत्युयोगे समागते ।
तदा नौरेति शीघ्रेण लाभाद्यं चान्ययोगतः ।।'

**क्षेमायातं वहित्रस्य बुडनं प्लवनं जले।**
**पण्यव्यवहृतौ लब्धिर्नाविप्रश्नचतुष्टयम् ।। १४० ।।**

**दीप्तिः**—वहित्रस्य नावः प्रवहणस्य वा क्षेमायातं कुशलपूर्वकमागमनं, बुडनं जले तिरोधानं प्लवनं सन्तरणं पण्यव्यवहृतौ प्रवहणागतक्रयाणकानां व्यवहारे लब्धिर्लाभो नाविप्रश्नचतुष्टयं नौसम्बन्धिचत्वारो प्रश्ना अत्र जायन्ते । यदि कश्चिज्जनो नौकां प्रति पृच्छति तदा तस्य प्रश्नस्य तदा तस्य प्रश्नस्य चत्वार एव भेदा भविष्यन्ति—तत्र प्रथमः—नावः कल्याणं विद्यते न वेति ? द्वितीयः किं नौकाया जले निमज्जनं जातम् ? तृतीयः—नावः प्लवनं वायुवेगात् चक्रवातेन वा यदा-कदा समुद्रे प्रभावितं भवत्येव । अतः किमसौ रक्षिता विद्यते न वेति । चतुर्थः—नौकयाऽऽनीतं वस्तु लाभदायकं भविष्यति न वा ।

**हिन्दी**—नौका से सम्बन्धित चार प्रश्न होते हैं । १. नौका का सकुशल आगमन २. जल में डूबना ३. भटकते या तैरते रहना तथा ४ नौका द्वारा आई वस्तु के द्वारा लाभ का होना ये ही चार प्रश्न नौका से सम्बन्धित होते हैं ।

**क्षेमागमनपृच्छायां मृत्युयोगोऽस्ति चेत्तदा।**
**क्षेमेणायाति नौः पण्यलाभो व्यवहृतौ भवेत् ।। १४१ ।।**

**दीप्तिः**—नौः सकुशलमागमिष्यति न वाः, नौस्थितस्य वस्तुनो लाभो भविष्यति न वेति प्रश्ने समुदिते व्याहरति—क्षेमागमनपृच्छायां प्रवहणस्यागमनं क्षेमयुक्तं भविष्यति न वेति प्रश्ने चेन् मृत्युयोगोऽस्ति पूर्वोक्तमृत्युकारकयोगो भवेत् तदा वाच्यम्—"नौः क्षेमेणायाति ।" व्यवहृतौ पण्यव्यवहारे पण्यलाभो भवति । स्पष्टार्थो यदि प्रश्ने मृत्युयोगो भवेत्तदा नौकयाऽऽनीतवस्तुनो महान् लाभो भविष्यतीति वाच्यम् ।

**हिन्दी**–'नौका सकुशल आयेगी' प्रश्न में तथा उस पर लाई गई वस्तु से लाभ के प्रश्न में यदि मृत्युयोग हो तो नौका सकुशल आती है और वस्तु से व्यापार में लाभ होता है ।

नौका से सम्बन्धित प्रश्न के द्वारा जलीयमार्ग से प्रचलित व्यापार में लाभालाभ का विचार किया जाता है ।

**नेक्षते लग्नपो लग्नं मृत्युपो नेक्षेते मृतिम्।**
**यानपात्रस्य वक्तव्यं निश्चितं बुडनं तदा ।। १४२ ।।**

**दीप्ति**:–अथेदानीं नौबुडनमुपस्थापयति–लग्नपो लग्नेशो लग्नं तनुगृहं नेक्षते न पश्यति, मृत्युप अष्टमेशो मृतिमष्टमस्थानं नेक्षते न विलोकयति तदा यानपात्रस्य पोतस्य निश्चितं बुडनं जले निमज्जनं वक्तव्यं वाच्यमिति । अस्य श्लोकस्यैको व्यतिरेकश्लोकोऽपि लभ्यते—

लग्नं पश्यति लग्नेशश्छिद्रं मृत्युपतिर्यदि ।
न बुडति तदा पोतो लाभो भवति निश्चितम् ।। इति

भुवनदीपककारस्य मतं प्रश्नभूषणकारोऽपि समर्थयति—

लग्नपो नेक्षते लग्नं नाष्टमं निधनाधिपः ।
नद्यां प्रबूडिता नौका विज्ञेया गणकोत्तमैः ।। इति

ताजिकनीलकण्ठ्यामपि एतदेव श्लोकान्तरेण लिखितं विद्यते—

लग्नेशोऽष्टपतिः स्वस्वगेहं नालोकते यदि ।
तदा यानेऽस्य वक्तव्यं निश्चितं मज्जनं बुधैः ।। इति

**हिन्दी**–यदि लग्नेश लग्न को न देखता हो और अष्टमेश अष्टम स्थान को न देखता हो तो 'नौका निश्चित ही डूब गई' ऐसा कहना चाहिए ।

**लग्नपश्चाष्टमस्थानाधिपतिर्वा भवेद् यदि।**
**सप्तमे कथयन्त्यन्तर्जले वापनिकं तदा ।। १४३ ।।**

**दीप्ति**:–वा लग्नपो लग्नेश अष्टमस्थानाधिपतिश्च रन्ध्रेशश्च यदि सप्तमे सप्तमस्थाने भवेत् तदा वापनिकं नौका अन्तर्जले जलमध्ये कथयन्ति । योगेऽस्मिन् नौरगाद्यजलमध्ये इतस्ततो भ्रमति शीघ्रं तटं न प्राप्नोति । ताजिकनीलकण्ठ्यामपि अयमेवाभिप्रायो निगदितो नीलकण्ठेन—

'तावुभौ सप्तमस्थौ चेज्जले वापनिकां वदेत् ।'

'तावुभौ' अर्थात् लग्नेशाष्टमेशौ यदि सप्तमस्थौ भवतस्तदा नौका जलमध्ये स्थिता भवति । प्रश्नभूषणकार अस्मिन् योगे नावि शत्रुवह्निकृतमुत्पातं सूचयति

लग्नपो वाऽष्टमेशश्च सप्तमे यदि वर्तते ।

तदोत्पातं विजानीयादरिवह्निकृतं तदा ।। अ० ५ श्लो० ३ ।।

केचन 'वापनिकं' पाठस्य स्थाने वापकिनं स्वीकुर्वन्ति तन्न भ्रमाभिभूतोऽयं प्रयोग:।

**हिन्दी**–अथवा लग्नेश और अष्टमेश यदि सप्तम स्थान में हों तो नौका जल के बीच में भटक रही है–ऐसा फलादेश करना चाहिए ।

यह श्लोक पूर्वोक्त श्लोक का पूरक है । इस योग में 'नौका' डूब गई है' ऐसा नहीं कहना चाहिए । इस योग में दिग्भ्रम या तूफान आदि आपदाओं से नाव भटक जाती है जो डूब भी सकती है या तट को प्राप्त भी कर सकती है ।

**नीचस्थोऽस्तमितो वा मृत्युपर्तिर्नवमगो रिपुक्षेत्रे ।**

**नीचो वा भवति तदा व्यवहृतलाभो भवेन्न तदा ।। १४४ ।।**

**दीप्ति**:–यदा मृत्युपतिरष्टमेशो नीचस्थोऽस्तमितो वा नवमगो धर्मभावे स्थितो भवति, अथवा अष्टमेशो रिपुक्षेत्रे स्वकीये शत्रुराशौ भवति, अथवा यस्मिन् कस्मिन्नपि भावे स्थितो अष्टमेशो नीचस्थो स्यात्तदा व्यवहृतलाभो नौकागतवस्तुव्यवहारे लाभो न भवेदिति । अत्र प्रकारत्रयेण अष्टमेशस्थितिवशेनाऽलाभ: प्रदर्शित आचार्येण ।

**हिन्दी**–यदि अष्टमेश नीचस्थ अथवा अस्तङ्गत होकर नवम भाव में हो या शत्रुगृही हो अथवा नीच राशि का होकर किसी भी भाव में बैठा हो तो नौका द्वारा लायी गई वस्तु के व्यापार से लाभ नहीं होता है ।

यहां नौका अथवा पानी के जहाज से सम्बन्धित अन्य कतिपय ज्ञातव्य योगों को निर्देशित करना आवश्यक है । यद्यपि आचार्यपद्मप्रभुसूरि इस द्वार में चार प्रश्नों का ही विचार करते हैं–(१) क्षेमायात (२) बुडन (३) प्लवन और (४) पण्यव्यवहृति, परन्तु परवर्ती प्रश्नशास्त्रियों ने नाविक कुशल, अग्निभय, शत्रुभय एवं अन्य स्थितिओं का भी विचार किया है । इनमें से कुछ ख्यात योग इस प्रकार हैं—

**खाली नौका लेकर आने का योग—**

यदि प्रश्नलग्नेश अथवा उसका नवमांशेश वक्री होकर क्रूर ग्रह से दृष्ट हो तो नौका विना किसी वस्तु को लिये ही लौट आती है—

लग्नाधिपे वक्रिणि चांशनाथे

..........पापैर्दृष्टस्तदा वस्तु विनेति वाच्यम् । ता० नी०

**नौका के मालिक का बीमार होने तथा मरने का योग—**

(१) यदि लग्न, अष्टम या चतुर्थ भाव में पाप ग्रह बैठे हों और लग्नेश सूर्य किरणों से अस्तङ्गत हो तो नौका स्वामी को रोगी या मृत समझना चाहिए—

लग्नेऽष्टमे चतुर्थे वा पापो रविकरेऽङ्गपे ।

नौकापतिस्तदा रोगी मृतो वेति बुधो वदेत् ।। प्रश्नभूषणम्

(२) यदि अष्टमेश लग्न, राशीश या चन्द्रमा को क्रूरदृष्टि से देखता हो तो नौका सहित मालिक डूब जाता है—

लग्नेशं चन्द्रनाथं वा चन्द्रं सवा मृत्युपो यदि ।

पश्येत्क्रूरदृशा नावा समं नश्यति नौपत्तिः ।। ताजिकनीलकण्ठी

**नौका स्थित लोगों में परस्पर कलह का योग—**

यदि लग्नेश और राशीश में परस्पर दृष्टि सम्बन्ध हो और दृष्टि शत्रुवद् हो तो नौका में स्थित लोगों में परस्पर कलह होता है । यह यवनाचार्य का मत है—

लग्नचन्द्रपती क्रूरदृष्ट्याऽन्योन्यं यदीक्षितौ ।

तदा पोतजनानां च मिथः कलहमादिशेत् ।।

**नाव को शत्रु तथा अग्नि से भय का योग—**

जिस योग से भुवनदीपककार तथा ताजिकनीलकण्ठीकार नौका को भटकने की सूचना देते हैं उसी योग से प्रश्नभूषणकार अग्नि और शत्रु से भु कहते हैं ।[१]

इति नौमृतिबन्धनद्वारम् ।

अथातीतदिनलाभादिद्वारम् ।। ३१ ।।

**लग्ने यदिह विचारो भवति नवांशकगतैर्ग्रहैस्तत्र ।**

**बीजं गुरुपदेशो लग्ननवांशोन्यथायुक्तम् ।। १४५ ।।**

**दीप्तिः**—ममातीतदिनानि कथं गतानि ? मम व्यतीतस्य कालस्य फलादेशं कुरु प्रभृतिप्रश्ने यो विचारो लग्ने भवति स पृच्छाकाले नवांशकगतैग्रहैरपि । तत्कालप्रश्नलग्नस्य नवमांशे ये ग्रहा:स्थिता भवन्ति तैग्रहैर्व्यतीतं फलं वाच्यम् । अस्मिन् फलकथनक्रमे गुरुपदेशो बीजं भवति । गुरुं विना किमपि तथ्यं स्पष्टं न स्फुरति । यदि किञ्चिदुपदिष्यते तदपि लग्ननवांशोऽन्यथाऽम्नायाभावात् ।

ग्रहाणां नवमांशभोगस्य दिनादिसंख्या यथा पूर्वै: प्रतिपादिता तथाऽत्र निरुप्यते—

नवांशोऽर्कसितज्ञानां सत्रिभागमहस्त्रयम् ।
नाड्य: पञ्चदशैवं दोर्भौमे पञ्चदिनानि च ।।
मासो जीवे सत्रिभागस्त्रयोदश च वासरा: ।
शनेर्मासत्रयं त्र्यंशो राहोर्मासद्वयं पुनः ।। इति ।

**हिन्दी**—बीते हुये समय में लाभालाभादि कैसा हुआ है इसके ज्ञान हेतु जिस प्रकार लग्न से विचार किया जाता है वैसे ही ग्रह जिस नवमांश में स्थित हों उस से विचार करना चाहिए, परन्तु नवमांशों से फल कहने में गुरु का उपदेश बीज रूप होता है । गुरु से उपरिष्ट हुए विना नवमांश माध्यम से फल कथन अन्यथा और अयुक्त होगा ।

**तत्तन्नवांशकगतान्खेचरान् न्यस्य तद्दिने लग्ने।**

**प्रष्टुरवाधार्य गणकैर्वाच्यमतिक्रान्तदिनवृत्तम् ।। १४६ ।।**

**दीप्तिः**—प्रश्नकुण्डली निर्माय सर्वेषां ग्रहाणां स्थापनं नवमांशवशेन तत्र तत्र कार्य यत्र ते नवमांशे स्थिता भवन्ति । इदमेव तथ्यमत्र प्रस्तौति—लग्ने तद्दिने पृच्छालग्न इत्यर्थ: । गणकैर्दैवज्ञैर्नवांशकगतान् ग्रहान् न्यस्य विलिख्य तदनुसारमतिक्रान्तदिनवृत्तं व्यतीतदिनफलं मनसि अवधार्य प्रष्टुः फलस्य कथनं

वाच्यम् । तव इमानि दिनानि लाभप्रदानि आसनिमानि चालाभप्रदानि नवांशकैग्रहैर्वाच्यमयं स्पष्टाऽर्थ: ।

**हिन्दी**—प्रश्नकाल में जो ग्रह जिस नवमांश में हो उसे वहाँ स्थापित कर बीते हुए दिनों का फलादेश प्रष्टा के लिए ज्योतिषी द्वारा कहना चाहिए ।

वस्तुत: यह प्रश्नशास्त्र की सर्वथा पृथक् फलादेश प्रकिया है । इस विधि से फलादेश करने के पूर्व अवश्य ही अनुभवी गुरु से फलादेश प्रक्रिया बोध जानना पड़ेगा अथवा कतिपय कुण्डलियों के फल कथन से इसे प्रयोग की कसौटी पर कसना पड़ेगा ।

ग्रहों के नवमांश की दिनादि संख्या इस प्रकार निर्दिष्ट है—

| | |
|---|---|
| सूर्य | ३ दिन २० घटी |
| चन्द्र | १५ घटी |
| मंगल | ५ दिन |
| बुध | ३ दिन २० घटी |
| गुरु | १ मास १३ दिन २० घटी |
| शुक्र | ३ दिन २० घटी |
| शनि | ३ मास १० दिन |
| राहु/केतु | २ मास |

ये नवमांश ग्रह एक नवमांश खण्ड को ऊपरनिर्दिष्ट काल में पूरा करते (भोगते) हैं ।

इति अतीतदिनलाभादिद्वारम् ।

अथ लग्नेशांशलाभादिद्वारम् ।। ३२ ।।

**लग्नपतिर्यत्रांशे पृच्छालग्ने तमंशमालोक्य ।**
**लग्नाधिपांशलग्नांशनाथयोर्दृग्युतिसुहृत्वम् ।। १४७ ।।**

**दीप्ति**:—पृच्छालग्ने प्रश्नकालिके लग्ने लग्नपतिर्लग्नेशो यत्रांशे यस्मिन्नंशे तिष्ठति तमंशमालोक्य संदृष्ट्य लग्नाधिपांशो लग्नेशस्यनवमांशो लग्नांशनाथ लग्नञ्च यस्मिन्नंशे भवेत् तयोरुभयोर्लग्नाधिपलग्नांशयो: स्थिति

दुग्युतिसुहृत्त्वं दृष्टियोगस्थानयोगमैत्रीभावान् विलोकनीयम् । यदि स्थितिरियं साध्वी समुत्पद्यते तदा शुभस्य वृद्धिर्भवति ।

**हिन्दी**—प्रश्न काल में लग्नेश जिस अंश पर स्थित हो उसे देख कर, लग्नेश जिस के नवमांश में हो उनका स्वामी और लग्न के नवमांश स्वामी को देख कर विचार करना चाहिए कि इनका परस्पर दृष्टियोग, स्थानयोग और मैत्रीयोग बन रहा है या नहीं ।

इस श्लोक में मुख्यतः लग्न और लग्नेश के नवमांश स्वामी की दृष्टि, स्थिति और मैत्री से फल वृद्धि का विचार किया गया है ।

**यत्र स्यात्तत्र भवेत्सुदरता तनुधनादिभावेषु।**

**यावल्लग्नाधिपतेरंशकालः स कालश्च ।। १४८ ।।**

**दीप्तिः**—यत्र तनुधनादिभावेषु लग्नद्वितीयादिभवनेषु पूर्वोक्तं घटते अर्थात् लग्ननवमांशेशलग्नेशनवमांशेशयोर्दृष्टिर्युतिर्मैत्री वा स्यात् तत्र स्यात् तत्र तन्वादिस्थानेषु सुन्दरता भवति । इयं शोभनास्थितिः कियत् कालपर्यन्तं तिष्ठति। इत्याकाङ्क्षायामुत्तरयतियावल्लग्नाधिपतेरंशकालो लग्नेशस्यांशकालः स्यात् तावत् कालपर्यन्तमियं स्थितिः स्यात् । वस्तुत अत्र योगकालस्यावधिर्विचारितो विद्यते । प्रत्येकं ग्रहस्य नवमांशभोगकालः पठित एव विद्यते । अत असौ शोभनकालो नवमांशभोगावधिपर्यन्तमेव भवति ।

**हिन्दी**—पूर्वोक्त योग जिस तनु, धनादि भावों में लगा होगा उन भावों की वृद्धि होगी । यह वृद्धि लग्नेश नवमांशपति के भोगकाल पर्यन्त होगी ।

प्रत्येक ग्रह का नवमांश भोगकाल बतलाया जा चुका है ।

**सञ्चार्योऽसौ तावद्यावत् पूर्णा भवन्ति ते भावाः ।**

**मासफलं सम्पूर्णं जातं लग्नाधिपात् तदिदम् ।। १४९ ।।**

**दीप्तिः**—असौ लग्नाधिपतिरंशाधीपतिश्च तावद्धनादिस्थानेषु सञ्चार्यो यावत्ते धनादयो भावाः पूर्णा भवन्ति । यस्मिन् स्थाने लग्नांशाधिपयोर्दृष्टिः सम्पूर्णा स्यात् अथवा तयोर्युक्तत्वं मित्रत्वं वा स्यात् तदा तस्य स्थानस्य संख्यया माससंख्या वक्तव्या । अत्र स्पष्टार्थो लग्नस्थानात् लग्नेशो यस्मिन् भावे तिष्ठति तावन्मा..............कार्यस्य संसिद्धिर्जायते ।

**हिन्दी**—यह काल धानदि भावों में तब तक चलना चाहिए जब तक ये भाव पूर्ण न हो जाए और भाव से लग्नेश (दृष्टि, युति) जितनी संख्या पर स्थित हो उतने मासों में कार्य पूर्ण होता है—ऐसा कहना चाहिए ।

यह श्लोक 'यत्र स्यात् तत्र भवेत् सुन्दरता' का विकल्प है । प्रश्न लग्न का नवमांश स्वामी और स्पष्ट लग्नेश का नवमांश स्वामी जितने भावों के अन्तर पर स्थित होता है उतने मास पर्यन्त कार्य चलता रहता है । कार्य की पूर्णता तब होती है जब भावों का अन्तर भी पूर्ण हो जाता है ।

इति लग्नेशांशलाभद्वारम् ।

अथ द्रेष्काणादिद्वारम् ।। ३३ ।।

**द्रेष्काणे यत्र लग्नं स्याद् द्वाविंशतितमे ततः ।**
**द्रेष्काणे यदि लग्नेशः पृच्छायां तन्मृतिर्ध्रुवम् ।। १५० ।।**

**दीप्तिः**—अथेदानीं रोगिणः कुशलपृच्छायां द्रेष्काणद्वारा फलं कथयति—यत्र प्रश्ने द्वाविंशतितमे द्रेष्काणे लग्नं स्यात् ततो तस्मिन् द्रेष्काणे यदि लग्नेशः स्थितस्स्यात् तदा रोगिणो ध्रुवं मृत्युर्भवति । एकस्मिन् राशौ द्रेष्काणस्य त्रीणि खण्डानि भवन्ति । प्रथम खण्डे १ तः १० अंशाः समायान्ति । एवमेव ११ अंशतः २० अंशपर्यन्त द्वितीयखण्डं भवति । २१ अंशतः ३० अंशपर्यन्तं तृतीयखण्ड पूर्यते । अत्राचार्येण लग्नत्रिभागरूपस्य द्रेष्काणस्य कल्पना कृता । सप्तमस्थानं यावद् एकविंशतिरंशाः व्यतीता भवन्ति । द्वाविंशतितमेऽशेऽष्टमस्थानं भवति । अतोऽत्र यदि लग्नेशः स्थितः स्यात् तदाऽवश्यमेव क्षेमप्रश्ने मरणं वाच्यमिति ।

**हिन्दी**—यदि रोगी के क्षेम प्रश्न में लग्न से २२ वें द्रेष्काण में लग्नेश स्थित हो तो निश्चित ही (रोगी की) मृत्यु होती है ।

यहाँ आचार्य ने लग्नत्रिभागरूप द्रेष्काण की कल्पना की है । सप्तमभाव तक २१ द्रेष्काण बीत जाते हैं । २२ वाँ द्रेष्काण अष्टम भाव का होता है । अतः अष्टम भाव में लग्नेश का स्थित होना मृत्युकारक माना गया है । एक

राशि में तीन द्रेष्काण होते हैं । अत: सप्तम भाव तक ७×३=२१ द्रेष्काणों की पूर्ति हो जाती है ।

**लग्नपो मृत्युपश्चापि लग्ने स्यातामुभौ यदि।**
**स्थितौ द्रेष्काण एकस्मिंस्तदा मूर्तिर्निरामया ।। १५१ ।।**
**लग्नपो मृत्युपश्चापि मृत्यौ स्यातामुभौ यदि ।**
**स्थितौ द्रेष्काण एकस्मिंस्तदा मृत्युर्न संशयः ।। १५२ ।।**

**दीप्तिः**—यदि लग्नपो लग्नेशो मृत्युपश्चाष्टमेशश्च उभौ द्वौ लग्ने प्रश्नलग्ने स्यातामेवञ्च द्वौ यदि एकस्मिन्नेव द्रेष्काणे स्थितौ भवेतां तदा मूर्ति: पीडितस्यद्रेहो .........रुजा रहित: स्यात् । द्वितीयश्लोके लग्नेशरन्ध्रेशयो अष्टमस्थानस्थितिवशेन मृत्युयोगं निरुपयति—लग्नपो लग्नेशो मृत्युपश्च रन्ध्रेशौऽपि मृत्युभवने रन्ध्रे उभौ द्वौ स्यातां तथा एकस्मिन्नेव द्रेष्काणे स्थितौ भवेतां तदा मृत्युर्भवति । नात्र संशय: कर्त्तव्य: इति । लग्नेशरन्ध्रेशयोरेकस्मिन् द्रेष्काणे तदा एव स्थिति: संभाव्यते यदा तयोरंशो द्रेष्काणस्यैखण्डे भवेत् । एकस्मिन् राशौ द्रेष्काणस्य त्रीणि खण्डानि भवन्तीत्युक्तमेवपूर्वम् ।

**हिन्दी**—रोग से सम्बन्धित प्रश्नकुण्डली में यदि लग्नेश और अष्टमेश लग्न में स्थित हों तथा एक ही द्रेष्काण में हों तो शरीर निरोग होता है । यदि लग्नेश और अष्टमेश दोनों अष्टम स्थान में एक ही द्रेष्काण में स्थित हों तो नि:सन्देह मृत्यु होती है ।

प्रथम योग में लग्नेश और अष्टमेश लग्न में एक ही द्रेष्कोण में हों तो निरोग करते हैं—बतलाया गया है । ऐसी स्थिति में लग्नेश प्रबल हो जाता है तथा अष्टमेश अपने स्थान से षष्ठस्थ हो जाने के कारण मृत्युभाव के फल का नाशक हो जाता है । इसीलिए रोगी व्यक्ति का शरीर या जिससे सम्बन्धित प्रश्न होता है उसका शरीर स्वस्थ्य रहता है । द्वितीय योग में अष्टमेश और लग्नेश एक ही द्रेष्काण में होने के कारण प्रबल हो जाते हैं तथा अष्टमस्थ होकर और अधिक घातक हो जाते हैं । ऐसी अवस्था में 'द्रेष्काणे यत्र लग्नं स्याद् द्वाविंशतितमे तत:' योग भी मृत्युकारक हो जाता है । अत: रोगी की मृत्यु नि:सन्देह होती है ।

लाभयोगः—

**लग्नपो लाभपश्चापि लाभे स्यातामुभौ यदि।**

**स्थितौ द्रेष्काण एकस्मिन् प्रष्टुर्लाभस्तदाध्रुवम् ।। १५३ ।।**

**दीप्तिः**—इदानीं द्रेष्काणवशेन प्राश्निकस्य फलं प्रतिपाद्यते—लग्नपो लग्नेशो लाभप एकादशेशश्चोभौ द्वौ यदि लाभे स्यातां तथा एकस्मिन्नेव द्रेष्काणे भवेतां तदा प्रष्टुः प्राश्निकस्य लाभो ध्रुवं निश्चयेन भवति ।

**हिन्दी**—यदि लग्नेश और लाभेश प्रश्नकाल में एकादश स्थान में बैठे हों और एक ही द्रेष्काण में बैठे हों तो प्राश्निक को निश्चित ही लाभ होता है ।

वस्तुतः यह कार्यसिद्धि योग का ही प्रकारान्तर है, क्योंकि—'लग्नाधिपस्य योगो लाभाधीशेन लाभकरः' श्लोक में लग्नेश और एकादशेश का योग आचार्य ने लाभदायक माना है । वहीं पर—(बारहवें द्वार में) यह भी कहा गया है कि चन्द्रमा की दृष्टि इन दोनों पर (लग्नेश और एकदाशेशपर) पड़ती हो तो 'परं लाभ' होता है । ठीक उसी योग का कथन द्रेष्काणवश यहाँ भी लिया गया है ।

पुत्रप्राप्तियोगः—

**लग्नपः पुत्रपश्चापि पुत्रे स्यातामुभौ यदि।**

**स्थितौ द्रेष्काण एकस्मिन् पुत्रप्राप्तिस्तदा भवेत् ।। १५४ ।।**

**दीप्तिः**—इदानीं लग्नेशपुत्रेशाभ्यां पुत्रप्राप्तियोगं विचारयति लग्नपो लग्नेश पुत्रप्रश्चापि पञ्चमेशश्चापि पुत्रे पञ्चमभावे यदि उभौ द्वौ स्यातां तथा एकस्मिन्नेव द्रेष्काणेऽपि स्यातां तदाऽवश्यमेव पुत्रप्राप्तिर्भविष्यतीति कथनीयमेतत्फलम् ।

**हिन्दी**—लग्नेश और पञ्चमेश दोनों एक साथ ही पञ्चमभाव में बैठे हों तथा एक ही द्रेष्काण में हों तो 'पुत्र की प्राप्ति होगी'—ऐसा फलादेश करना चाहिए ।

इस प्रकार लग्नेश और कार्येश यदि दोनों एक साथ एक भाव में एक द्रेष्काणस्थित हों तो उस कार्य की सिद्धि होती है । यदि कार्येश त्रिक स्थानों का

पति हो तो कष्ट का प्राबल्य कहना चाहिए । इसी तथ्य का प्रतिपादन आचार्य अगले श्लोक में कर रहे हैं ।

**एवं द्वादशभावेषु द्रेष्काणैरेव केवलै:।**
**बुधो विनिश्चितं ब्रूयाद् भावेष्वन्येषु नि:स्पृह: ।। १५५ ।।**

**हिन्दी:**—एवं पूर्वोक्तविधिना द्वादशभावेषु तन्वाद्भिावेषु केवलैर्द्रेष्काणैरेव फलं कथनीयम् । निस्पृहो बुधोऽन्येषु भावेषु योगोऽयं दृष्ट्वा विनिश्चितं निश्चयमेव ब्रूयाद् । कश्चित्प्रष्टाऽऽगत्य किमपि पृच्छतितदातस्य प्रश्नस्योत्तरं द्रेष्काणस्थित कार्येशलग्नेशयोर्योगद्वारा कथनीयम् ।

**हिन्दी**—इस प्रकार से बारहभावों में केवल द्रेष्काण के द्वारा फलादेश करना चाहिए । नि:स्पृह गणक को अन्य भावों में स्थित लग्नेश कार्येश के एक द्रेष्काणस्थ होने से निश्चय पूर्वक फल कहना चाहिए ।

**प्रश्नकाले सौम्यवर्गो यदि लग्नेऽधिको भवेत्।**
**ग्रहभावानपेक्षेण तदा ज्ञेय शुभं फलम् ।। १५६ ।।**
**प्रश्नकाले क्रूरवर्गो लग्ने यद्यधिको भवेत् ।।**
**अशुभं फलमाख्येयं ग्रहापेक्षां विना तदा ।। १५७ ।।**

**दीप्ति:**—इमौ द्वौ श्लोको जातकशास्त्रस्य प्रश्नशास्त्रस्य च सिद्धान्तभूतौ विद्येते प्रश्नकाले यदि लग्ने सौम्यवर्ग: शुभवर्ग अधिको भवेद् अर्थात् लग्ने सौम्यग्रहाणां संख्याऽधिका स्यात्तथा द्रेष्काणनवमांशादयो वर्गा शुभग्रहाणां स्युस्तदाऽन्येषां भावानां विचारं विनैव शुभफलं कथनीयम् । एवमेव यदि प्रश्नकाले लग्ने क्रूरग्रहाणां वर्ग अधिको भवेत् तदाऽन्येषां ग्रहाणां विचारापेक्षां विनैव अशुभं फलं वाच्यम् । विषयेऽस्मिन् षट्पञ्चाशिकायां पृथुयशसा उक्तम्—

यो यो भाव: स्वामिदृष्टो युतो वा
सौम्यर्वा स्यात् तस्य तस्यास्तिवृद्धि: ।
पापैरेवं तस्य भावस्य हानि–
निर्देष्टव्यापृच्छतां जन्मतो वा ।।

**हिन्दी**–यदि प्रश्नकाल में लग्न में शुभग्रहों का वर्ग अधिक हो तो अन्य भावों के विचार के बिना ही शुभ फल कहना चाहिए । इसी प्रकार यदि प्रश्नकालिक लग्न में अशुभ ग्रहों का वर्गाधिक्य हो तो ग्रहादिविचार के बिना ही अशुभ फल कहना चाहिए ।

यह जातक शास्त्र तथा प्रश्नशास्त्र का स्थिर सिद्धान्त है । यदि लग्न में सौम्य ग्रह का गृह, नवमांश, द्रेष्काण, होरा, त्रिशांश तथा द्वादशांश हो तो शुभ फल होगा ही । ऐसी स्थिति में अन्य भावगत दोष गौण हो जाते हैं । यदि स्थितिविपर्यय हो जाये अर्थात् अशुभग्रह का वर्गाधिक्य लग्न में हो जाये तो अशुभ फल कहना चाहिए ।

अथ दोषज्ञानद्वारम्—

**मूर्तौ छिद्रे द्वादशेऽर्को व्यये कर्मणि भूसुतः ।**
**षष्ठान्त्याद्याष्टमश्चन्द्रो व्ययास्ते शेष खेचराः ।। १५८ ।।**
**क्षेत्राधिपाकाशदेविशाकिन्याद्याश्च देवताः ।**
**देवदोषाम्बुदेवात्मव्यन्तरामिहरादयः ।। १५९ ।।**

**दीप्तिः**–प्रश्नकाले यदा मूर्तौ लग्ने छिद्रेऽष्टमे द्वादशे व्यये स्थानेऽर्को सूर्यो व्यये द्वादशे कर्मणि दशमे भूसुतो भौमः, षष्ठान्त्याद्याष्टमश्चन्द्रो रिपुव्ययलग्नाष्टमगश्चन्द्रो विधुः, शेषखेचराः बुधगुरुशुक्रशनिराहव व्ययास्ते द्वादशसप्तमे क्रमशः मिहिरादयः सूर्यादयः क्षेत्राधिपः क्षेत्रपालस्याकाशदेव्याः शाकिन्याः, देवतायाः, देवदोषस्य, अम्बुदेवतायाः, आत्मनः दोषः, प्रेतान्तिकादेः प्रभाववशेन कष्टं भवति । स्पष्टार्थो यदि रविः १-८-१२ स्थाने वा भवति तदा क्षेत्रपालस्य दोषो वाच्यः । ६-१२-१-८ स्थाने वा चन्द्रो भवति तदाऽऽकाशदेवतादोषोऽवधेयः । यदि १२-१०- वा स्थाने भूसुतो (मङ्गलः) भवति तदा शाकिनीदोषो विजानीयात् । एवमग्रे १२-७ वा स्थाने क्रमशो बुध-गुरु-शुक्र-शनि-राहुवः स्तुतदा क्रमेणैव वनदेवताया दोषात् देवताया दोषात् जलदेवताया दोषात्, आत्मदोषात् प्रेतादिगृहदेवताया दोषात् कष्टं भवतीति ।

अन्यदपि कारणं दोषस्य भवति परं ग्रहा आधिदैविकदोषमपि सूचयन्ति। यथा ग्रन्थान्तरे (ताजिकनीलकण्ठी) लभ्यते—

वह्न्यङ्के द्वादशे षष्ठे लग्नात्पापग्रहो यदि ।

हतो गदैर्जलैश्शस्त्रैस्तस्य दोषः कुलोद्भवः ।।

लग्नात् ३-९-१२-६ स्थानेषु कश्चित्पापग्रहस्तिष्ठति तदा हननरुक्जलशस्त्रकुशलो दोषादिभिः कष्टं मृत्युर्वाभवति । एतेषु स्थानेषु चन्द्रादिग्रहा यथादोषमुद्भावयन्ति तथाऽत्र कथ्यते—

चन्द्रे देव्यो रवौ देवाद् भौमे स्वकुलगौत्रजान् ।

बुधे विचित्रजनितो दोषः स्यात्कर्मसम्भवः ।। इति ।

रोगाद् दोषाद् वा मुक्तिर्भविष्यति न वेति जिज्ञासायां ताजिकनीलकण्ठ्यां यथा लभ्यते—

केन्द्रस्थैर्बलिभिः पापैरसाध्या देवतागणाः ।

सौम्यग्रहैश्च केन्द्रस्थैः साध्या मन्त्रस्तवार्चनैः ।।

कण्टकाष्टत्रिकोणस्थाः शुभा उपचये शशी ।

लग्ने च शुभसन्दृष्टे रोगी रोगाद् विमुच्यते ।। इति ।

**हिन्दी**—यदि प्रश्नकाल के समय सूर्य १-८-१२ वें भाव में हो तो क्षेत्रपालजन्य दोष होता है, चन्द्रमा ६-१२-१-२ वें भाव में हो तो आकाशदेवता जन्य दोष होता है, मंगल १२ या १० वें भाव हों तो शाकिनी जन्य दोष होता है । एवमेव बुध १२ या ७ वें भाव में हो तो वनदेवता जन्य दोष गुरु १२ या ७ वें भाव हों तो देवदोष शुक्र १२ या ७वें भाव में हो तो जलदेवता जन्य दोष शनि १२ या ७वें भाव में हो तो आत्मदोष तथा राहु १२ या ७ वें भाव में हो तो प्रेतगृह देवता जन्य दोष होता है ।

इस सम्बन्ध में ताजिकनीलकण्ठी में दो श्लोक हैं—

प्रेताश्च राहौ पितरः सुरेज्ये चन्द्रेऽम्बुदेव्यस्तपनेपिदेव्यः ।

स्वगोत्रदेव्यश्च शनौ बुधे च भूतानि विन्द्याद् व्ययरन्ध्रसंस्थे ।।

शाकिन्य आरे भृगुजेऽम्बुदेव्यो गृह्णन्ति मर्त्यं विमुखं मुकुन्दात् ।

स्वर्क्षोच्चगे वीर्ययुते च साध्याश्चन्द्रे च नीचे विबले न साध्याः ।।

अर्थात् राहु ग्रह के कारण प्रेत दोष, बृहस्पति के कारण पितर दोष, चन्द्रमा के कारण जलदेवी दोष, सूर्य के कारण देवी दोष, शनि के कारण कुल देवता दोष, बुध के कारण भूत प्रेत दोष, मंगल के कारण शाकिनी दोष तथा शुक्र के कारण जलदेवता दोष से मनुष्य को व्याधि होती है ।

ग्रहों के द्वारा अदृष्ट आधिदैविक शक्तियों के उत्पात की सूचना मिलती है । जातक परिजात के अनुसार सूर्य ग्रह देवता तथा ब्राह्मण के अभिशाप जन्य व्याधि को सूचित करता है । एवमेव चन्द्र कालिका, मंगल भैरव तथा भूतप्रेत, बुध वैष्णवशक्ति, गुरु-अग्नि, देवता, ब्राह्मण तथा शाप, शुक्र स्त्रीजनित प्रयोग, शनि पिशाच तथा ...........प्रतादिकों से उत्पन्न व्याधि को बतलाया है । अत: ऐसी दशा में मन्त्रप्रयोग और ग्रह जनित दोष के निवारक विना केवल औषधि से लाभ सम्भव नहीं होता ।

इति दोषज्ञानद्वारम् ।

अथ दिनचर्याद्वारम् ।। ३५ ।।

**यदीन्दुर्दिनचर्यायां शुभः स्यादुदयास्तयोः ।**
**श्रेयांस्तदाऽवगन्तव्यं सकलोऽपि हि वासरः ।। १६० ।।**

**दीप्तिः**–पुरा राजानः स्वकीयायां सभायां राजज्यौतिषी पालयन्ति स्मः। ते स्वदिवसं प्रति पप्रच्छुः यदद्य मे दिवसः कीदृग् भविष्यति ? शोभनअशोभनो वेति ? अस्य प्रश्नस्योत्तरे सर्वथाऽयं श्लोको व्यवहर्त्तव्यः–दिनचर्या प्रश्नकाले यदीन्दुश्चन्द्र उदयास्तयो उदयकालेऽस्तकाले च शुभस्स्यात् तदा श्रेयान् अवगन्तव्यः । हि निश्चयेन सकलोऽपि सम्पूर्णोऽपि वासरो दिवसः कल्याणकर अवगन्तव्यः ।

**हिन्दी**–दिनचर्या के प्रश्न में अर्थात् कोई पूछे कि मेरा दिन कैसा व्यतीत होगा ? तो इस प्रश्न के उत्तर में यदि उदय और अस्त के समय चन्द्रमा शुभ हो तो समग्र दिन श्रेयकारक समझना (कहना) चाहिए ।

प्राचीन काल में राजा गण अपनी राजसभा में पण्डित (गणक) रखते थे। उन्हें आशंका होने पर अपने दिन भर के भविष्य की भी चिन्ता हो जाती

थी। दिनचर्या के क्षेम प्रश्न में चन्द्रमा ही सर्वथा कारक ग्रह होता है । यदि यह प्रश्नकाल के दौरान शुभग्रह से दृष्ट, युत या शुभराशिस्थ हो और अस्तपर्यन्त इसी स्थिति में हो तो दिन उत्तम ढ़ंग से बीतता है । केवल दिन भर के लिए प्रश्न किया जाये तो सूर्योदय और सूर्यास्त पर से इष्टानयन करके फल कहना चाहिए।

असिना वधयोगः—

**राहौ वाथ कुजे क्रूरे परस्मिन्नपि खेचरे।**
**अष्टमे स्वगृहे चैव दिने चन्द्रेऽसिना वधः ।। १६१ ।।**

**दीप्तिः**—दिनचर्याप्रश्ने अष्टमे स्थाने राहौ, कुजे वा स्थिते सति परस्मिन्नपि क्रूरे खेचरे स्थिते यदि ते स्वगृहस्थाः स्युस्तस्मिन्नेव दिने तत्रैवाऽष्टमस्थाने चन्द्रो भवति तदाऽसिना खड्गेन वधो वाच्यः । पूर्व १०१ श्लोके छुरिकया प्रहारयोगो निरूपितो विद्यते । तत्र विवादीयुगलयोर्मध्ये छुरिकायाः प्रहारो वर्णितः । अत्र अकस्माद् (योगेऽस्मिन्) तीक्ष्णधारेणास्त्रेण मृत्युयोगः प्रतिपादितः । द्रेष्काणद्वारेऽपि प्रतिपादितं यद् अष्टमेशोष्टमस्थो मृत्युकारको भवति । स एव सिद्धान्त अत्रापि दृश्यते । अष्टमस्थे क्रूरग्रहे विशेषरूपेण भौमे राहौ वा शस्त्रादिना मृत्युर्भवति ।

**हिन्दी**—दिनचर्या के प्रश्न में यदि अष्टम स्थान में राहु या मंगल दूसरे क्रूरग्रह स्थित हों तथा स्वगृही हों और चन्द्रमा भी अष्टमस्थ हो तो उस दिन वार (तीक्ष्ण धार वाले अस्त्र से) मृत्यु होती है ।

वाद विवाद विचारद्वार में भी छुरा से प्रहार का योग दिया गया है, परन्तु वहाँ दो विवादियों के बीच कलह के अन्तराल में प्रहार का योग है । द्रेष्काणद्वार में भी मृत्यु योग का वर्णन करते समय लिखा गया है कि अष्टमेश क्रूर हो और अष्टमस्थ हो तो मृत्यु होती है । इससे स्पष्ट होता है कि अष्टमस्थान घातक होता है । अष्टमस्थ राहु या मंगल तीक्ष्णधारवाले अस्त्र से प्रहार कराते हैं । यदि ये स्वगृही क्रूराक्रान्त तथा चन्द्रमा के साथ अष्टमस्थ हों तो निश्चय ही तलवार और आग्न्येयास्त्र से घात देने वाले होते हैं ।

**दन्तुरवदनः कृष्णो विज्ञेयो राहुदर्शने प्राणी।**
**षष्ठेऽष्टमे च जीवः कथयति च सन्निपातरुजम् ।। १६२ ।।**

**दीप्तिः**—अथेदानीं जन्मकालस्वरूपं निरुपयति-यदा राहुः प्रश्नकाले प्रश्नलग्नं पश्यति आहोस्वित् जन्मराशौ वर्तमानो राहुर्जन्मलग्नं पश्यति तदा प्राणी जातकः प्राश्निको वा दन्तुरवदनः प्रलम्बदन्तो विज्ञेयो ज्ञातव्यः । स कृष्णवर्णोऽपि भवति । प्रश्नलग्नात् जन्मलग्नाद् षष्ठेऽष्टमे च स्थाने विद्यमानः सन्निपातरुजं सन्निपातगदं कथयति ददाति । राहोर्दृष्टिर्यदा लग्ने भवति किम्बा चन्द्रे भवति तदा जनः कृष्णकायो दन्तुरवदनश्च जायत इति ।

**हिन्दी**—प्रश्नलग्न पर राहु की दृष्टि होने पर मनुष्य काले रंग का तथा बड़े-बड़े दाँत वाला होता है । लग्न से षष्ठ या अष्टम स्थान में बृहस्पति हो तो सन्निपात रोग होता है ।

राहु का वर्ण कृष्ण कहा गया है । जहां ग्रहों से रोग का निर्देश किया गया है वहाँ बृहस्पति को सन्निपात कारक माना गया है ।

इति दिनचर्याद्वारम् ।

अथ गर्भादिप्रश्नद्वारम् ।। ३६ ।।

**पृच्छन्त्याः पितृमन्दिरे पितृगृहाभिज्ञाक्षरं गुर्विणी ।**
**पत्युश्चापि तदीयमन्दिरगतं गुर्व्या अभिज्ञाक्षरम् ।।**
**शुक्लारब्धदिनव्यवस्थिततिथीन्दत्त्वामुनींश्च ध्रुवान् ।**
**भागं वह्निभिरेककेन तनयो द्वाभ्यां सुता खेन खम् ।। १६३ ।।**

**दीप्तिः**—गर्भिण्या गर्भतः किं भविष्यति पुत्रो वा पुत्री ? गुर्व्या गर्भिण्या प्रश्ने पितृमन्दिरे पितुर्गृहे पितृगृहाभिज्ञाक्षरं पितृधृतनामाक्षरं विगण्य तस्य संख्यायास्तथा पत्युर्नामाक्षरसंख्यायाश्चैक्यं विधेयम् । यदि सा गुर्विणी पतिगृहादागत्य प्रश्नं लग्न तदा तदीयमन्दिरगतमभिज्ञाक्षरं पतिवेश्मस्थितनामाक्षरं पत्युर्नामाक्षरैर्योजनीयम् । स्पष्टार्थो यद् पितुः पत्युर्वागेहस्य प्रचलितनामाक्षरं गुर्विण्याः पत्युर्नामाक्षरैर्योजनीयम् । पुनश्च शुक्लारब्धदिनव्यवस्थिततिथीन् दत्त्वाऽर्थात् शुक्लपक्षस्य प्रतिपदारभ्य कृष्णामावास्यां यावत् त्रिंशत्तिथिषु या

प्रश्नकालिकी तिथिर्विद्यते तस्याः संख्या तस्मिन् योगाक्षरेषु योज्या । मुनींश्च ध्रुवान् सप्तध्रुवकान् दत्त्वा वह्निभिस्त्रिभिर्भागं प्रदेयम् । एकेन शेषेन तनयो भवति द्वाभ्यां सुता खेन शून्येन शेषेन खं शून्यं भवति, गर्भो गलति जातो वा विनश्यतीति भावः ।

अन्येषु ग्रन्थेष्वपि विषयेऽस्मिन् प्राप्यते—

विषमस्थितेष्वेकाकी पुत्रजन्मप्रदः शनिः ।
राहुयुक्तस्तु तत्कालं विद्धः कालेन मृत्युदः ।।

अपि च—

यदीन्दुभौमशुक्राभ्यां गर्भो वा वीक्षितः शुभैः ।
तदासौ जनयेत् पुत्रो नात्र कार्या विचारणा ।।
शुक्रो वा चन्द्रमा वापि नेक्षते यदि पञ्चनम् ।
तदा पुत्रस्य पृच्छायां न पुत्रोऽस्तीति कथ्यते ।। इति

**हिन्दी**—गर्भ से सम्बन्धित प्रश्न में यदि गर्भवती पिता के घर में हो तो वहाँ का प्रसिद्धनाम अथवा पतिघर में हो तो वहां का धारित नाम ग्रहण करके जो अक्षर संख्या हो उसमें पति के नामाक्षरों को जोड़कर वर्तमान तिथि की संख्या जोड़कर उसमें ध्रुवाङ्क ७ जोड़ दें । समग्र योगाङ्क में ३ से भाग देने पर यदि शेष १ बचे तो पुत्र, २ बचे तो कन्या और शून्य शेष बचे तो गर्भ शून्य कहना चाहिए अर्थात् गर्भनाश हो जायेगा या उत्पन्न सन्तति मर जायेगी ऐसा फलादेश करना चाहिए ।

यहां शुक्लादि गणना का निर्देश है, अर्थात् पूर्णिमा १५ और अमावस्या ३० संख्या मानें । कृष्ण पक्ष की विधि की तिथि की गणना १६¯१७ १८ आसि करें । ऊपर लिखित विधि से गर्भ का पिण्ड बनाया गया है, परन्तु इसका सत्यापन प्रश्नकुण्डली से भी कर लेना चाहिए ।

एकस्मिन् प्रकृतिः शुभेन सहिते सौख्यातिरेकः क्षपा—
**नाथेन श्रुतिरद्भुता प्रसरति क्रूरेण पीडोद्भवः।**
**शुक्रे सप्तमगे स्त्रियाः पतिगतं पुत्रादिकं वा पदम्।**
**पृच्छन्त्याः सुरतस्थितावनुभवो वाच्योऽष्टमस्थेऽपि च।। १६४ ।।**

**दीप्तिः**—यदि काचित् स्त्री गणकं प्रति पृच्छति कीदृशं सुखं विद्यते पत्युः, पुत्रः कुशली विद्यते न वेति, स्थानलाभो भविष्यति न वेति तदा शुक्रग्रहेण सर्वमेतद् विचार्यते । इदमेवात्र वर्णयति पतिगतं, पुत्रादिकं अर्थात् पुत्रादिकानां वा पदं स्थानादिकं पृच्छन्त्याः स्त्रियाः प्रश्नकाले एकस्मिन् शुक्रे भार्गवे सप्तमगे तदा प्रकृति स्वभावो न विशेषः कश्चिदपि वाच्यः । अर्थाद् पूर्ववदेव सर्वं प्रचलति। शुभेन सहिते शुभग्रहेण सहिते शुक्रे सौख्यातिरेकः सौख्यातिशयो वाच्यः । क्षपानाथेन सहिते शुक्रे चन्द्रयुक्ते दैत्यगुरौ श्रुतिरद्भुता परमाख्यातिः प्रसरति विस्तारतां याति । क्रूरेण ग्रहेण युक्तः शुक्रः पीडोद्भवः पीडाकारको भवति । अनेन प्रकारेण सुरतस्थितशुक्रग्रहद्वारा यत्फलं निर्दिष्टमर्थात् सप्तमस्थशुक्रेण यत्फलं कथितं तदेव फलमष्टमस्थे शुक्रेऽपि च वक्तव्यम् ।

अत्र केचन विशेषप्रश्ना ग्रन्थादन्यस्माद् उदाहृत्य प्रस्तूयन्ते—

लग्नाधिपे ह्यविनष्टे न बुभुक्षा भौमसूर्ययोः ।
असकृच्छिद्रे चन्द्रसितौ चेत्सहजोतिसार आख्यातः ।।
छिद्रे भौमार्कौ चेद्रुधिरोद्रेकश्च पित्तजोद्रेकः ।
सितभौमौ बलहीनौ सक्रूरशनिर्विविधरोगः ।।
सन्निपातरुजं कुर्यात्सक्रूरश्चेद् बृहस्पतिः ।
स्त्रीप्रश्ने छिद्रगे भौमे विनष्टं योनिदूषणम् ।।
शत्रुप्रश्ने तु षष्ठेशो मूर्तौ बस्तिविधुस्तथा ।
यद्यन्यः षष्ठभः खेटः शत्रोः पक्षकरः स तु ।।
अत्र भाटकपृच्छायां लग्नेशो भाटकप्रदः ।
सप्तगो भाटकग्राही भाटकोत्पत्तिकृनभः ।।
चतुर्थमवसानं स्यादेषु सौम्यग्रहैः शुभम् ।
व्यस्ते व्यस्तं सुहृच्छत्रुमवस्थित्याद्यसर्वतः ।।

इत्यलम् ।

**हिन्दी**–यदि कोई स्त्री पतिसुख पुत्रादिकों के सुख और स्थान सुख से सम्बन्धित प्रश्न करे तो प्रश्नकुण्डली में शुक्र ग्रह अकेले सप्तम स्थान में बैठा हो तो 'जैसी स्थिति है वैसी ही रहेगी' कहना चाहिए । यदि शुक्र शुभग्रह युक्त (बुध, बृहस्पति युक्त) हो तो 'अत्यधिक सुख मिलेगा' एवं शुक्र चन्द्रमा युक्त हो तो अत्यधिक 'प्रसिद्धि मिलेगी' तथा पापग्रह युक्त शुक्र हो तो 'पीड़ा उत्पन्न होगी' ऐसा फलादेश करना चाहिए । सप्तमस्थ शुक्र ग्रह के प्रभाव से जो फल आदिष्ट हैं उन्हें अष्टमस्थ शुक्र से भी कहना चाहिए ।

यहाँ 'सुरतभवन' से आशय है 'सप्तमस्थान ।' स्त्री की कुण्डली में सप्तम भाव पति का होता है । अत: वहां से पति के सुखादिकों का विचार किया जाता है ।

**तुर्यं पश्यति तुर्यपोऽस्ति निहितं क्रूरेऽपि तस्मिन्भवे।**
**चेन्न प्राप्ति: खलु खेचरे च सदधिष्ठानं तदिन्दौ स्थिते ।।**
**स्वामिप्रेक्षणवर्जितेऽपि च तदस्तित्वं न तद्वार्षिके**
**लाभश्चन्द्रयुगीक्षणेन रहितं पूर्ण च चन्द्रेक्षणम् ।। १६५ ।।**

**दीप्ति**:–अथेदानीं चतुर्थभवनान् निधि लक्षयति–तुर्यप: चतुर्थेश: तुर्यं चतुर्थस्थानं पश्यति तदाऽस्ति निधि: । निहितं निधानं भवति निधिर्यदा चतुर्थेश: चतुर्थभावं पश्यति, परं क्रूरेऽपि तस्मिन् चतुर्थभवने स्थिते सति प्राप्तिर्न भवेत् । क्रूरग्रहयुतिनिधि नाशयति । अर्थात् यदि क्रूराश्चतुर्थास्था भवन्ति तदा निहितनिधे: प्राप्तिर्न स्यात् । मूलत: क्रूरग्रहस्य दृष्टिर्यदि तुर्ये भवति तदा निधिस्तत्र भवति परं च निधे: प्राप्तिर्न स्यात्। मूलत: क्रूरग्रहस्य दृष्टिर्यदि तुर्ये भवति तदा निधिस्तत्र भवति परं च निधे: प्राप्तिर्न जायते। अन्यऽस्मिन् खेचरे तत्र स्थिते सूर्यादिप्रभृतिकग्रहे सदधिष्ठानं भवति तथा च स्वामिप्रेक्षणवर्जितेऽपि चतुर्थेशदृष्टिरहितेऽपि तदिन्दौ स्थिते चन्द्रमसि तत्र वा स्थिते वीक्षिते वा तदस्तित्वमर्थात् निहितस्यास्तित्वं वाच्यम् । परं चन्द्रयुगीक्षणेन रहितं निधानं तद्वार्षिके न मिलति यदा तस्मिन् चन्द्रस्य युतिर्दृष्टिर्वा भवति तदा (तस्मिन् वर्षे) लाभो जायते ।

**हिन्दी**–यदि प्रश्नकाल में चतुर्थेश चतुर्थ भाव को देख रहा हो तो निधि (छुपा खजाना या कोष) होती है । यदि चतुर्थ स्थान पर क्रूरग्रह की दृष्टि पड़े तो उस निधि की

प्राप्ति नहीं होती । चतुर्थस्थान में सूर्यादि ग्रहों में से कोई भी स्थित हो तो सत् पात्र (उत्तम वर्तन) में धन रहता है । चन्द्रमा की स्थिति चतुर्थ में हो तो चतुर्थेश की दृष्टि के विना भी निधि कहनी चाहिए परन्तु वह निधि चन्द्रमा की युति या दृष्टि के विना एक वर्ष पर्यन्त नहीं मिलती । निधि लाभ चन्द्रमा की पूर्ण दृष्टि पड़ने पर ही होता है ।




इस प्रश्नकुण्डली में प्रश्नकर्त्ता को निधि मिलने का योग बताया गया । प्रश्नकर्त्ता दिल्ली क्षेत्र का रहने वाला था । उसने निधि हेतु भूमि खोदवाई परन्तु उसे बन्द घड़े में भस्म और अस्थियाँ मिली । वस्तुत: क्रूरादिग्रह चतुर्थस्थ है । अत: निधि तो भूमि के अन्दर थी । चन्द्र की दृष्टि होने से उसके मिलने का भी योग था परन्तु चन्द्रमा पर क्रूर दृष्टि पड़ रही थी तथा लग्न केतु ग्रस्त था । इसलिए ........के स्थल पर उसे भस्मादि की प्राप्ति हुई । साथ ही साथ प्रश्नकुण्डली में शुक्र चतुर्थस्थान से किसी भी तरह युत या दृष्ट नहीं रहा ।

द्रव्यखननयोग:—

**योगेऽस्तित्वविधायके हिमरुचिर्नीचे विनष्टोऽपि वाऽ-**
**मावास्यानिकटस्थितोऽपि कथित: प्राज्ञै: प्रमाणं तथा ।।**
**लाभे चन्द्रयुगीक्षणेन भवत: सौम्यस्यतेऽस्तस्तदा।**
**वर्षेऽन्यत्र निधिग्रहाय सुधिया कार्य: प्रयत्नो महान् ।। १६६ ।।**

**दीप्ति:**—योगेऽस्तित्वविधायके निधानस्य ज्ञानं सम्प्राप्यपि निधानास्तित्वदर्शके प्रागुक्तेऽपि योगे तावत् कालपर्यन्तं न खननाय प्रयतेद् यावद् हिमरुचिश्चन्द्रो नीचे वृश्चिके भवति विनष्टोऽपिवा चन्द्रो निधिदायको न भवति सूर्यसङ्गमात्, क्रूरविद्धो वा चन्द्रो विनष्टो भवति । अमावास्यातिथे: सन्निकटस्थोऽपि विधुर्बाधको भवति निधिप्राप्तिप्रयासे । अत:

प्राज्ञैर्गणकैस्तथा प्रमाणं निधिप्राप्तये उद्यमो न कार्य इति । पूर्वैः प्रतिपादित असौ योगः । तथा लग्ने एकादशभवने चन्द्रयुगीक्षणे चन्द्रस्य युतिर्दृष्टिर्वा न स्याद् एकादशभवने चन्द्रसंयोगं विना दृष्टि विना वेति भावः निधिप्राप्तये प्रयासो न कर्त्तव्य इति । यदि एकादशे भवने सौम्यस्य ग्रहस्य संयोगदृष्टी भवतस्तदा सुधिया विज्ञेन निधिग्रहाय अन्यत्रवर्षे अपरेऽब्दे महान् प्रयत्नः कार्यः। निधिग्रहाय पूर्वं तावदनुष्ठानादिकं विधाय एव प्रयत्नः कार्यः । कार्येऽस्मिन् विघ्नोत्पत्तिर्बलीयसी । अतः शान्तिकर्मण आवश्यकताऽनिवार्या । एतदर्थमेवोक्तं 'कार्यः प्रयत्नो महान्' इति ।

**हिन्दी**–निधि प्राप्ति का (पूर्वोक्त) योग होने पर यदि चन्द्रमा नीचराशि में स्थित हो, विनष्ट (अस्त, क्रूरादिविद्ध) हो अथवा अमावास्या तिथि के निकट हो तो उसे निकालने का प्रयास नहीं करना चाहिए । ऐसा विज्ञ पूर्वाचार्यों ने कहा है । लाभ स्थान पर चन्द्रमा की युति या दृष्टि न हो और शुभग्रह की युति या दृष्टि हो तो एक वर्ष बाद द्रव्य निकालने का महान् उद्यम करना चाहिए ।

महान् उद्यम से तात्पर्य है–शान्तिकर्म आदि कराके ही निधि निकालने का प्रयास करना चाहिए क्योंकि इस कार्य में विघ्न बहुत आता है ।




प्रश्नकर्त्ता ने प्रश्न किया कि मेरे घर में निधि है । उसे मैं कब निकालूँ ? प्रश्नकुण्डली के आधार पर चतुर्थ स्थान में सौम्यग्रह गुरु बैठा है तथा चतुर्थेश बुध उसे देख रहा है । अतः निधि तो है परन्तु चन्द्रमा अमावास्या का है अर्थात् सूर्य सानिध्य के कारण अस्तङ्गत है और चतुर्थ भवन शनि ग्रह से दृष्ट है । इसलिए प्रश्नकर्त्ता को आदेश दिया गया कि वह सम्वत्सर पर्यन्त निधि निकालने का उद्योग न करे ।

**जाया स्थानस्य भावा न भृगुसुतमृते नो शनि धर्मभावा।**
**नो सूर्य कर्मभावा न बुधहिमकरौ लाभभावा भवन्ति ।।**
**विद्यास्थानस्य भावा न गुरुमवनिजं तातनिस्थान भावा।**
**नेन्दुं मृत्युर्न सर्वे न च तनयपदं भार्गवं श्वेतरश्मिम् ।। १६७ ।।**

**दीप्ति:**—अथेदानीं वर्णयति कं कं ग्रहं विना कस्य-कस्य भावस्य विचारो न सम्पद्यते तद्यथाभृगुसुतं शुक्रमृते विना जायास्थानस्य सप्तमस्थानस्य न विचार: सम्पद्यते । अनेन प्रकारेण अन्येऽपि भावा निर्दिष्टग्रहान् विना न विचार्यन्ते । शनि विना धर्मभावा नो नवमस्थानजन्यविषया न विचार्यन्ते । सूर्यं विना कर्मभावा दशमभावा नो विचार्यन्ते । नो पदमव्ययम् । हीनत्वज्ञापकमेतत्पदम् । बुधहिमकरौ ज्ञचन्द्रौ विना लाभभावा न भवन्ति । यद्यपि प्रश्नशास्त्रे चन्द्रं विना कस्यापि भावस्यादेश: कर्त्तुं न शक्यते तथापि विशेषेणैकादशभावस्यफलं तु चन्द्रं विना नैव निष्पद्यते । एवमेव विद्यास्थानस्य पञ्चमस्थानस्य भावा गुरुं बृहस्पति विना न भवन्ति । अवनिजं भौमं विना तातनिस्थानभावा नवमस्थानभावा न फलदायका भवन्ति । इन्दुं विना चन्द्रमृते मृत्युर्नाष्टमस्थानं विचारणीयम्। एवमेवाऽन्ये सर्वेऽपि भावा इन्द्रं विना न विचार्यन्ते । अपि च तनयपदं पञ्चमस्थानं श्रोतरश्मि शुक्रं विना न फलीभूतं । केचन श्वेतरश्मिपदेन चन्द्रमा एव मन्यन्ते ।

ग्रहाणां हर्षस्थानानि ब्रुवन्ति केचन—

लग्ने बुध: शशी वह्नौ षष्ठे भौम: कलत्रग: ।
शुक्रो नवमग: सूर्यो लाभे जीव: शनिर्व्यये ।।

कीदृशो ग्रहो कार्यकरो न भवति तत्कथयति—

सूर्यस्याग्रगवान्राहोर्मुखे पुच्छेथ वा स्थित: ।
स्वगृहात्सप्तराशिस्थो: ग्रह: कार्यकरो नहि ।।

अपि च—

षष्ठपं द्वादशं लग्नाद् वक्रितोस्तमितोभ्रग: ।
क्रूराक्रान्तादिना नष्टो नीचस्थो मित्रनीचग: ।। इति ।

**हिन्दी**—शुक्र के विना सप्तम भाव, शनि के विना नवम भाव, सूर्य के दशम भाव, तथा बुध और चन्द्र के बिना आय (एकादश) भाव विचारित नहीं होता । विद्याभाव का विचार बृहस्पति के विना पितृभाव का विचार मंगल के विना तथा चन्द्र के विना मृत्यु

एवं अन्य भावों का विचार नहीं होता । शुभ्ररश्मि शुक्र के विना पुत्रस्थान का विचार नहीं होता ।

कुछ आचार्य 'शुभरश्मि पद से चन्द्रमा का अर्थ लगाते हैं । जो ग्रह जिस स्थान का कारक होता है वह उसके फल को अभिवद्ध करता है । ऐसी स्थिति में चन्द्रमा तथा शुक्र दोनों को ही पुत्रस्थान का कारक मानना पड़ेगा ।

**लग्नं चन्द्रोऽस्ति यस्मिंस्तदथ दिनमणिर्यत्र जीवस्तन्नी-**
**चोऽस्तङ्गतो वा न यदि सुरगुरुर्वक्रितश्चेत्तदाद्यम् ।।**
**वित्काव्यक्ष्माङ्गजानां भवति किल बली यस्त्रयाणां तदीयं**
**दौर्बल्यं यत्र मन्दस्तदपि च न बली शिष्टयोर्यस्तदीयम् ।।१६८।।**

**दीप्तिः**–अथ प्रश्नकुण्डल्या लग्नं तात्कालिकमुदितं प्रथमम्, यस्मिन् भावे चन्द्रोऽस्ति तद् द्वितीयम्, यत्र यस्मिन् भावे दिनमणिः सूर्यो भवति तत् तृतीयम्, यत्र यस्मिन् भावे जीवोगुरुः स्थितः परं स नीच अस्तङ्गतो वक्री वा न स्यात् तच्चतुर्थम्, इमानि सर्वाणि स्थानानि आद्यं चिन्त्यं प्राथम्येन विचारणीयं निरीक्षणीयञ्च । तदनन्तरं वित्काव्यक्ष्माङ्गजानां बुधशुक्रमङ्गलानां त्रयाणां किल निश्चयेन यो बली तदीयं पञ्चनम् क्रमेण बुधशुक्रभौमानां मध्ये यो बलवान् ग्रहो भवति तस्य स्थानस्य निरीक्षणं करणीयम् । यत्र मन्दो शनिर्यस्मिन् भावे भवति तस्य दौर्बल्यं हीनबलत्वं च स्याद् अर्थात् यदि मन्दो निर्बलस्यात्तदानीं शिष्टयोः प्रागुक्तयोर्बुधशुक्रयोः, शुक्रभौमयोः, बुधभौमयोर्मध्ये यो बली बलवांस्तदीय-स्थानमाद्यं करणीयम् । इदं षष्ठस्थानकम् । इमानि षट् प्रश्नलग्नानि भवन्ति ।

**हिन्दी**–प्रश्नकुण्डली के द्वारा फलकथन करते समय छः परिस्थितियों का निरीक्षण करना चाहिए—

(१) लग्न (२) जिस राशि में चन्द्र हो (३) जिस भाव में सूर्य स्थित हो (४) जिस भाव में बृहस्पति बैठा हो पर वह नीच, अस्तङ्गत या वक्र भाव को न प्राप्त हो (५) बुधशुक्र और मंगल में से जो कोई बली हो कर जिस भाव में बैठा हो तथा (६) शनि जहाँ पर स्थित हो, परन्तु यदि शनि निर्बल हो तो पूर्वोक्त बुध शुक्र तथा मंगल में से शेष दो जो अवशिष्ट हों उनमें जो बली हो उस भाव को लग्न मान कर विचार करना चाहिए ।

ये सभी विकल्प एक साथ अनेक प्रश्नों के उत्तर के लिए वर्णित हैं । एकाधिक प्रश्नों के उत्तर के लिए गणक को ऊपर कथित क्रमों के अनुसार लग्न कल्पना कर फलादेश करना चाहिए ।

**एवं षट् प्रश्नलग्नान्यथ च षडपराण्येवमेषां द्वितीया**
**न्येतेनैव क्रमेण स्फुटमिदमुदितं द्वादशप्रश्नलग्नम्।**
**एतेषां द्वादशानापमि च धनपदैर्द्वादशद्वादशैषं**
**तार्तीयीकैः तथान्यैरपिसकलमिदं पूर्णमब्ध्यब्धिचन्द्रैः ।। १६९ ।।**

**दीप्तिः**—एवं पूर्वोक्तप्रकारेण षटलग्नानि कथीतानि, अन्यच्च षट् प्रश्नलग्नानि तदतिरिक्तान्यपि भवन्ति । द्वितीयक्रमेऽपि षट्लग्नानि बलाबलज्ञानपूर्वकानि कथितानि सन्ति । एतेनैव क्रमेणोदितंद्वादशप्रश्नलग्नं स्फुटं कथितम् । एतेषां द्वादशानामपि च पुनर्धनपदैः कुटुम्बादिभेदैर्द्वादशद्वादशभेदाः संभाव्यन्ते । तार्तीयीकैस्तृतयभवनैरपि तथाऽन्यैरपि भावै इदं सकलं सम्पूर्णमब्ध्यब्धिचन्द्रैः चतुश्चत्वारिंशदधिकशतसंख्यैः प्रश्नलग्नैर्जगदेतत् पूर्णं भवति ।अत्राशयः १४४ प्रश्नलग्नभेदाः सूक्ष्मरूपेण जायन्ते । तार्तीयीकं तृतीयशब्देन ईकक् भाव्य निष्पाद्यते ।

**हिन्दी**—पूर्वोक्त प्रकार से आनीत छः लग्नों के अतिरिक्त छः स्थानों से द्वितीय क्रम में छः अन्य लग्न विचारणीय होते हैं । इसी प्रकार क्रमशः बारह प्रश्न लग्नों में धनादि, तृतीयादि भावों में भी बारह-बारह लग्न उदित होते हैं । अतः बारह भावों में बारह लग्नों के उदित होने के कारण १४४ ( एक सौ चौवालीस) लग्न भेद कल्पित होते हैं । इन भेदों के अन्तर्गत जगत् के सम्पूर्ण प्रश्न समाहित हो जाते हैं ।

यदि कोई प्रश्नकर्त्ता एक ही प्रश्नकाल में अनेकशः प्रश्नों को पूछता है तो उसको उत्तर देने के लिए इसी प्रक्रिया को अपनाना पड़ता है । इस माध्यम से विश्व के सभी प्रश्नों का समाधान किया जा सकता है ।

कार्यभेद से जब कार्येश बदल जाता है और उसका फल कथन सम्बन्धित भवन से किया जाता है तो फिर इस वितण्डा को पैदा करने से कोई विशेष लाभ नहीं । प्रश्नकुण्डली के माध्यम से छः या १२ प्रश्नों का उत्तर आसानी पूर्वक कहा जा सकता है । इसीलिए कतिपय आचार्यों ने प्रश्नकुण्डली के भावों से छः प्रश्नों पर ही विचार करने की रीति बतलाई है ।

उपसंहार—

**ग्रहभावप्रकाशाख्यं शास्त्रमेतत्प्रकाशितम् ।**

**लोकानामुपकाराय श्रीपद्मप्रभुसूरिभिः ।। १७० ।।**

**दीप्तिः**—भुवनदीपकस्य ग्रन्थस्यापरनाम विद्यते ग्रहभावप्रकाशः । प्रश्नशास्त्रस्य महान् ग्रन्थोऽयम् । त्रिस्कन्धज्यौतिषेऽस्य प्रश्नस्य समावेशात् शास्त्रत्वमेवोचितम् । ग्रहेषु प्रकाशो भवत्येव । अत इदमपि शास्त्रं ज्ञानात्मकं प्रकाशात्मकञ्च विद्यते । ज्ञानस्य स्वरूपं प्रकाशवदेवोज्ज्वलं भवति । अतः प्रकाशो लोकानामुपकाराय जगतां हिताय एव भवति । अत्राशयः श्रीपद्मप्रभुसूरिभिराचार्यै असौ भुवनदीपको लोकमुपकाणाय प्रकाशितः ।

कृष्णात्रेयगोत्रोद्भवस्य विदुषः श्रीमतः

कामेश्वर उपाध्यायस्य भुवनदीपकव्याख्यायां

दीप्तिविवृतिरियं परिपूर्णा ।

**हिन्दी**—आचार्य पद्मप्रभुसूरि ने 'ग्रहभावप्रकाश' नामक इस शास्त्र का प्रकाशन लोक हित के लिए किया ।

इस ग्रन्थ की प्रसिद्धि दो नामों से है–(१) भुवनदीपक तथा (२) ग्रहभाव प्रकाश । इसमें ३६ द्वारों की अद्भुत कल्पना की गई है । अतः यह छत्तीसगढ़ी दुर्ग की तरह अभेद्य है ।

इति भुवनदीपकः

—०—